# श्रीलोकमान्यचरितम्

श्री लोकमान्य गुरवे
भव्य कारण जन्मने ।
आश्रया वागुपचारोय
मण्यते भक्तिपूर्वकम् ॥

प्रणेता
कविशिरोभूषण
वासा सूर्यनारायणशास्त्री

Rashtrapathi Bhavan,
New Delhi-4
16, November 1970

Dear Shri Krishnamurti,

Your letter of 14th.

I have no objection to your making a mention of your father being taken to Simla by my father and myself.

Youre Sincerely,
V. V. Giri



आराधिताऽसि नवपल्लव कोमलेति
विज्ञानकुञ्जसमुदञ्चितमञ्जरीति ।
आह्लदनीति रसरूपिणि साहिति । त्व
प्राप्तोय मद्य समयो मयि सन्नीधत्स्व ॥

वा। सू। शात्री।



**Kavisirobhushana**

Vasa Suryanarayana Sastry

# ★ आमुखम् ★

कालस्थलसीमातिलङ्घीनि चिराय स्फूर्तिप्रदानि विश्वप्रभावाणि भवन्ति खलु लोकोत्तरमानवाना चरितानि। तत्रापि सविशेषप्रेरणाचणानि विलसन्ति जीवितानि चेष्टितानि च पारतन्त्र्यात् स्वदेशस्योन्मोचनविधौ लब्धवर्णाना वीरपुरुषाणाम्। अस्या कोटौ धुरीणा आसन् श्री बालगङ्गाधरतिलकमहोदया लोकप्रदत्तलोकमान्यपदलाञ्छना। किमत्र चित्रं यत्तद्गुणै कर्णमागत्य तच्चरित वर्णयितु प्रचोदितोऽभवत् प्रदेशान्तरवासी कविभूषणोऽधुना हन्त! दिवगत श्री वासा सूर्यनारायणशास्त्री।

इदमस्त्यनेन सूरिणा विरचित तन्निधनानन्तर दशवर्षे पुत्र धर्मपरिपालनकामेन तत्सूनुना विदुषा श्री वासा कृष्णमूर्तिना प्रकाशित लोकमान्यचरितम्।

आयुषो भूयिष्टमश प्रगतिहेतुषु समाजसुधारकार्यततिषु वीतवता प्रस्तुतकविना समारम्य पूर्णता नीतेय काव्यरचनेति तत्पुत्रलेखनोपलब्धो वृत्तान्त खलु नितान्त कुतूहल जनयति।

एकोनविशतिसर्गविभक्त मुपसहस्त्रपद्यमयमिद काव्य तैस्तै सुप्रतिपन्नै काव्यगुणै प्रसाधित वर्तते इति मामकोऽभिप्राय। चरित्रनायकस्यायु सरणी सावधान समालोचितवान् कविरिति विषयसूचीमात्र पठितवतामपि स्पष्ट भवेत्। ते ते प्रबोधाढ्या प्रसङ्गा कविना समञ्जसया सन्तुलनविशिष्टयाधिया निबद्धास्सन्ति यत्परिणामत पूर्णतया लोकमान्यमहिमप्रत्यये समरसो भवितु मर्हेत् पठितृगण। सम्मन्येत चैतादृशमनुभव कवे

"विनयनिचुलितानां माधुरीवाहिनीनां
विमलसरसभावस्फूर्तिविस्फारितानाम् ।
तिलकबुधहिमांशो र्भारतीनां विलासै
र्जगदिदं मतिबुद्धं विस्मितं सस्मितं च ॥

आधुनिकं प्रपञ्चं मधिकृत्यापि व्याहारसुलभा चोपयोगक्षमा च सुरभारतीति स्वरचनया सम्यङ्निर्दशितं कविना, भृशमुपकृतं चाद्यतनसंस्कृतप्रणयिनाम् । यथा तत्समये परिकल्पितं द्वद्वप्रभुत्वमुद्दिश्य लोकमान्यमुखेनेरितेऽस्मिन् पद्ये

"कश्चित्संघस्समागत्य कर्तास्मच्छक्तिशोधनम् ।
तत्रोत्तीर्णत्वं मालक्ष्य वृद्धिं र्दीयेत पालने ॥
एवमेव क्रमेण स्याद्दत्तं नः परिपालनम् ।
सैषा द्वद्वप्रभुत्वस्य पद्धतिः परिकल्पिता ॥
परीक्षा भारतीयानां न कस्मैचन रोचते ।
तद्गर्भे बहवो दोषाः प्रजाहितविरोधिनः ॥

अस्मिन् पर्याप्त काव्यगुणेऽपि काव्ये उपलभ्येत क्वचित क्वचिद्दोषो य इन्दो किरणेष्विवाङ्कः काव्यसौष्ठवे निमज्जति । यथा बाल (आर्थाद् बलवन्त) पदे गङ्गाधरार्थे नास्य प्रयोगः । १२९ तमे पृष्टे ६२ तमे श्लोकेऽन्यत्र च । तृतीयपृष्ठे २६ तमे श्लोके सदोषः प्रथमश्चरणो दीर्घपञ्चमाक्षरः श्लोके षष्टं गुरु ज्ञेयं सर्वत्र लघु पञ्चममिति नियमविरोधी ।

सर्वथा प्रशंसार्हस्यास्य ग्रन्थस्य प्रकाशने पञ्चशत रूप्यकमितमनुदानं कृतवद् आन्ध्रप्रदेशशासनं सर्वेभ्योऽभिनन्दनमवाप्तु मर्हति ।

हैदराबाद आ प्र-
१०--४--१९७१

चिं. द्वा देशमुख ।

## सम्पादकीयं - वक्तव्यम् ।

आन्ध्रप्रदेशे श्रीकाकुलमण्डले लब्धजन्मा अयं कविः वेगवती नदीतीरस्थे 'सारूरु' ग्रामे विराजमानायां वेदसंस्कृतपाठशालायां संस्कृत-साहित्यं मध्यैष्ट । 'काव्यकण्ठ' इति, 'मुनि'रिति च लब्धयशाः श्री गणपतिशास्त्री तदानीं कवेरस्य सहाध्यायी आसीत् । द्वावेतौ कदाचित् चन्द्रोपरागदिवसे नदीं वेगवतीं प्राप्य तत्सिकतासु उपविष्टौ प्रसङ्गतः संस्कृतकवितायाः क्षीयमाणां दशां स्मारं स्मारं विषीदन्तौ शपथमिमं जगृहतुः । "यथाकथंचित् काव्यप्रणयनैकतानहृदयाभ्यां आवाभ्यां संस्कृतकवितायास्समुद्धारः कर्तव्यः फलतश्च संस्कृतभाषा अद्यापि सजीवेति च निरूपणीया" इति । कालेन च सहजप्रतिभानवन्तः श्री गणपतिशास्त्रिणस्तु तेषु तेषु क्षेत्रेषु तपश्चरित्वा मुनिप्रथां चावाप्य 'उमासहस्रा'दिकं श्लोकरूपेण प्रणीय आत्मना कृतां प्रतिज्ञां निर्व्यूढ-वन्तः । मम पितरस्तु कुटुम्बभारावनताः कवित्वप्रणयनाय आवश्यक मवधान मलभमानाः स्वशपथनिर्वहणे अक्षमाः अन्तरेव विषीदन्तः कालं मनैषिषुः । अत्रान्तरे भागधेयवशात् राजमहेन्द्रनगरे गोदावरी-तीरवासः उपलब्धः । अस्ति च प्रतीतिः यत् गोदावर्याः जलवायौ काचन कविताचोदनशक्तिरस्तीति । एतदन्तरे च महामहोपाध्याय, श्री ताता सुब्बारायशास्त्रिवर्यस्य षष्टिपूर्तिमहोत्सवः श्चिकीर्षित आसीत् तच्छिष्यबृन्देन । तमिमं सन्दर्भं पुरस्कृत्य तच्छिष्येष्वन्यतमः कविरस्य गुरोर्जीवितं श्लोकरूपेण विरच्य अक्षररूपां 'गुरुदक्षिणां' मार्पयत् या खलु षष्टिपूर्तिसम्मानसचेन प्रकाशिता आसीत् । ग्रन्थस्या-स्यारम्भे सर्वशुक्लादेवी साहिती कविना एवं मावाहिता —

"आराधिताऽसि नवपल्लवकोमलेति
विज्ञानपुञ्ज समुदञ्चितमञ्जरीति ।
आह्लादिनीति रसरूपिणि साहिति ! त्व
प्राप्तोऽय मद्य समयो मयि सन्निधत्स्व ॥"

तदारभ्य च चिराराधिता देवी साहिती कवौ कृतसन्निधाना कवितापरणयने त नोदयामासेव ।

पितृपादै बहुवारं श्रीमद्रामायणस्य पारायणमकारि येनायत्न-दशात् प्राचेतसस्य प्रसन्ना शैली कविकृतिषु सुव्यक्तमभजत । कवि-कुलतिलक कालिदासश्चाभीष्ट· कविरासीदेतेषाम् । तदीयाना काव्याना निरन्तरपठनपाठनाभ्या तदीया वाग्धोरणी च आत्मसाच्चक्रुः । पश्यत अधोनिर्दिष्ट श्लोकद्वयम्——

दिविषत्तटिनीतरङ्गव-
त्पटुगम्भीरतरोक्तिगुम्फनै· ।
जगतीमखिला स पावयन्
विचचार प्रथमानवैभव ॥

सुगिरा मितयातिभद्रया
स निराडम्बरवेषसम्पदा ।
मनसा नवनीतमञ्जुना
शिशुचिर्विस्मयमादधे भृशम् ॥

गच्छता च कालेन मद्रपुरान्तर्गत मयूरपुर्या निवास आदृत· कविना । तस्मिन्नेव काले 'विश्वदाता' इति, 'देशोद्धारक·' इति

चावाप्तयशाः पत्रसम्पादकः, देशभक्तेष्वग्रगण्यः, महात्मन अनुयायी श्री काशीनाथ नागेश्वरराय भौतिक काय विसृज्य लिङ्गैवदमाप । निखिलाप्यान्ध्रजनता शोकसागरमग्नाऽभवन् । तादृशमहोदयस्य अस्तमय प्रत्यक्ष वीक्ष्य कविरपि नितरा शोकाविष्टचेता भूत्वा आत्मीयस्य शोकपूरोत्पीडस्य श्लोकमय परीवाह प्रतिक्रियात्वेनाभजत । 'श्री नागेश्वरराय जीवितचरित्रम्' इति नाम्ना तदिद प्रकटितमासीत् ।

मयूरपुरीनिवासेन भूयो भूयश्च दर्शनसेवनाभ्या जातस्फूर्तय एते तदधिष्ठानदेव श्री कपालीश्वरस्वामिन भक्तिभरितेनान्तरङ्गेण शताधिकै श्लोकैरतुष्टुवु येय स्तुति 'श्री कपालीश्वरविभूति' इति नाम्ना प्राकाश्यमभजत । इमा विभूतिमुद्दिश्य काश्या मीमासावेदान्ताचार्ये श्री सुब्रह्मण्यशास्त्रिभिरेवमभिप्रेतम्— "यत्र च सरला सरसा प्रसन्नपदगभीरा माधुर्यसौकुमार्यप्रसादादिगुणविभूषिता कविताशैली सर्वेषा भारतवर्षीयाणा विदुषा शिवभक्ताना च मनस्समावर्जयति । काश्चन श्लोकान् कवयन्त इमे शास्त्रिचरणा शब्दतोऽर्थतश्च श्रीमद्भगवच्छङ्करपादान् शिवावतारान् स्मारयन्तीत्यहो वैभव कवितारामाव्यस्य ।" इति ।

मध्यप्रदेश राज्यपाला. डा पट्टाभि सीतारामय्यमहाशया. कपालीश्वरविभूतिं परिशील्य एवमूचुः—

'अद्यापि सस्कृतकवयस्सन्तीति विज्ञाय पर मोऽमुदीति मे चेत । सन्ति बहूनि देवतास्तुतिरूपाणि शतकानि तथापि एतत्पुस्तकस्य परिशीलनान्तर अस्य ग्रन्थस्य प्रणयन अनावश्यकमिति को वा वक्तु प्रभवति " इति ।

एवमेव स्वकुलदेव शेषाचलावास श्री श्रीनिवासमुद्दिश्य 'श्रीनिवासविभूति' माकि शतेन श्लोकैर्मन्दाक्रान्तेन छन्दसा कविना सन्दृब्धा अस्ति । अत्र कवि स्वेष्टदेवस्य मूर्तिमेवमभिष्टौति--

मूर्तौ श्यामा दरविहसिते पाण्डुवर्णाभिरामा
किंचिद्रक्ता नयनयुगले वार्धिकन्यानुरक्ता ।
काचिद्व्यक्ति स्मरसमधुरा सन्निधत्ता मदन्त
स्वामिन्! मङ्गासहचर! जगन्मङ्गल! श्रीनिवास! ॥"

अत्र सर्वथा कालिदास स्मारयति कविरिति न पृथग्वक्तव्यमस्ति । कविकृता 'श्रीनिवासविभूति,' 'शङ्करमाला' चोरीकृत्य बहुभाषाविद्भि, स्वय च कविभि श्री बूर्गुल रामकृष्णराव् महाशयै रेव मुद्राङ्कितम् --

"भक्तिप्रधानेषु स्तुतिकाव्येषु अतीव गणनीया भूत्वा भक्तिपारवश्यापादने समर्था भवति इयं श्रीनिवासविभूति । तथैव 'शङ्करमाला' शिवपरतया 'मुकुन्दमाला' सहशास्तोत्रस्याभावलोपमापूरयन्ती भक्तेषु शिवकेशवाभेदभावोद्बोधनाय उपकरोति । एतत्कृतिदर्शनभागधेय मापादितवद्‌भ्य. श्री शास्त्रिभ्य सर्वथा कृतज्ञोऽहम्" इति ।

यदा किलाय कवि मयूरपुर्या मासिष्ट तदैव मूककवे जयन्त्युत्सव निर्व्यूढ स्तत्रत्यसंस्कृतपरिषदा । तदात्वे च मूकपचशत्या अभिनव मुद्रण म म श्री कुप्पुस्वामिशास्त्रिणा सुपोद्घातेन समंचित च सत् प्रकाशता मभजत । सैषा पचशती पितुर्हस्त

[3]

Dr. B. R SASTRY,
Proffessor and Head of the Sanskrit Department,
Osmania University

पावनानि खलु महात्मना चरितानि । लोकमान्यस्य कारण-जन्मनः असाधारणप्रतिभावत कर्मयोगोज्जीवनस्य स्वातन्त्र्यसमर-धुरीणस्य, भारतमातु सुतरत्नस्य नायकेषु तिलकायमानस्य बाल-गगाधरस्य साद्गुण्य जना एवमगायन्—

"कामन्दकेन बुद्धेन शकराचार्यमौलिना
विद्यारण्येन मुनिना श्री शिवाजीमहीभुजा ।
यद्यत्सुविहित कृत्य भारताभ्युदयार्थिभि
तत्तत्सुकृतमेकेन तिलकेनेति भण्यताम् ॥"

(श्री लोकमान्यचरितम् 5-45-47)

तस्यास्य सुगृहीतनाम्न निस्तुल जीवित वस्तु कविशिरोभूषणै श्री वासा सूर्यनारायणशास्त्रिभि सुरभाषाया काव्यरूपेण सग्रथितम् ।

वाल्मीकिवर्त्मनि चरन्नेष कवि सहृदयाना चेतासि रजयति । शैली प्रसन्ना निसर्गसुगमा च । देशभक्तिसभृतमेतत् काव्य महते उपदेशाय कल्पत इति नात्र विसवाद· ।

सन्तो ! वासा सूर्यनारायणशास्त्र्युदिता कृति ।
श्रीलोकमान्यचरित लोकमान्यत्वमृच्छतु ॥

भाग्यनगरम्
30-4-71

श्री

''पश्येयमेकस्य कवे कृति चेत्
सारस्वत कोषमवैमि रिक्तम् ।
अन्त प्रविश्यायमवेक्षितश्चेत्
कोणे प्रविष्टा कविकोटिरेषा ॥

इति वदन् तत्र भवान् नीलकण्ठदीक्षित सारस्वतस्य कोशस्याक्षय्यता सुरुचिर प्रतिपादयति । अत एव किल सुचिरात्कालादारभ्य अद्यावधि सहस्रशः कविपुगवा सारस्वतकोषमिम स्वप्रतिभाकुञ्चिकया समुद्घाटयन्त नैकानि विश्राणयन्ति काव्यरत्नानि सहृदयेषु । एतादृशेष्वेव रत्नेष्वन्यतमामिद श्री लोकमान्यचरितम् ।

कपालीश्वरविभूति, कोदण्डराममाहात्म्यादीना अनेकेषा ग्रन्थाना रचयितृभि कविशिरोभूषणादिबिरुदाचितै श्री वासा सूर्यनारायणशास्त्रि महोदयै सन्दृब्धेऽस्मिन् एकोनविशसर्गात्मके महाकाव्ये 'भव्यकारणजन्मन' लोकमान्यस्य बालगङ्गाधरतिलकस्य चरित जन्मत प्रभृति परमप्राप्तिपर्यन्त अतीव हृदयाहारिण्या रीत्या वर्ण्यते ।

कविताहेतुभूतेषु प्रतिभाव्युत्पत्त्यभ्यासेषु लोकशास्त्रादिज्ञानरूपा व्युत्पत्ति मध्यमणिन्यायेनातितरा प्रधान स्थानमधितिष्ठतीति सर्वविदितमेवेदम् । परन्तु प्रायस्सर्वेऽपि सस्कृतकवय विशेषतश्च क्रिस्तो द्वादशशताब्द्या. अर्वाचीना व्युत्पत्ते. प्रथम पक्ष लोकज्ञानमवजानाना

गतानुगतिकन्यायेन केवलमूहाकल्पित एव लोके विहरन्तः नैकानि काव्यानि व्यरीरचन् विरचयन्ति च । अत्र च पारतन्त्र्यकृता लौकिकविषयेषूपेक्षाबुद्धिरेव तेषां कारणं न पुनस्तदज्ञानमिति शक्यमेव वक्तुम् । अतश्च संस्कृतवाङ्मयचरिते विरलविरला नैव पश्याम सूर्यनारायणशास्त्रिसदृशान् कविवरेण्यान् ये किल स्वस्वकालीनमुदात्तं लौकिकं वृत्तं वस्तुतया परिगृह्णन्त प्रबन्धान् समग्रथ्नन् । तदेवं कविभिरप्रहतचरा कवितारीति काचन प्रारभत अयं कविपुङ्गवः संस्कृतसाहित्य इति प्रथमत एवात्युत्तममिदं काव्यमन्याम्य वैशिष्ट्यम् । अद्यत्वेऽन्येऽपि केचिदेतादृशानि काव्यानि निर्मान्तीत्यन्यदेतत् ।

यदि काव्यस्य नायकः कृतराज्यपालनः राजा वा तत्सचिवो वाऽभविष्यत् तदा कविनाऽत्र तज्जीवनसम्बद्धा नैके विषया वर्णनार्थं अवालप्स्यन्त, नगरार्णवजैत्रयात्रारिपुविजयादीनामपि यथास्थानं समनुप्रवेशोऽभविष्यदस्मिन् काव्ये । परन्तु कविरेतत्काव्ये तादृशं महापुरुषं नायकीचकार यो हि मेरुवद्धीरः, महामनीषी, मूर्धन्यो विदुषां, महाबलं शत्रुं पत्रिकाप्रहारैः, वाचाशिलीमुखैः, जनताशक्तिवज्रेण च समूलमुन्मूलयितुं प्रायतत । अतश्च युक्तमेवेदं यदस्मिन् काव्ये कविपुङ्गवोऽयं लोकोत्तरान् नायकस्यात्मगुणान् विस्तरशः प्राचीकशत् । भारतीयेषु विभेदभावजातं निष्कास्य ऐकमत्यं सम्पादयितुं बहुधा तेन कृतान् नानाविधोत्सवनिर्वहणसम्भाषणोत्तेजनादीन् हृदयङ्गमया रीत्या प्रत्यपीपदत्, येन तत्र भवतो लोकमान्यस्य

मान्यतमा आशया· पठितॄणा हृदयफलकेषु दृढ स्थगिता इव, गाढ च निखाता इव स्थिरीभवेयु । एव वस्तुवैशिष्टयकृत वर्णनावैशिष्टचं चात्राध्यक्षीक्रियते प्रतिपदम् ।

अथाद्य स्थालीपुलाकन्यायेनास्य कवितल्लजस्य कवितासौन्दर्य तावत् किंचित् परामृशाम ।

''सर्वशक्त्या सर्वविधैरुपायैर्धीरसम्मतै· ।
मातृदास्यदिमोक्षाय यतिष्ये जीवितावधि ॥ 1-64
पतेय पावके घोरे, पिबेय विषमुल्बणम् ।
त्यजेय भोगभाग्यानि सहेयापत्परम्परा ॥'' 1-65

इत्यादिना प्रथम एव सर्गे कृतसूत्रपात उत्साह क्रमेण परिपुष्टिमासाद्य रसीभावमापन्न इति रामरवीररस स्वातन्त्र्यवीरो वाऽन्य एवैतत्सजातीयोऽत्र काव्ये प्रधान इति अतिरोहितमिद सहृदयानाम् । लोकमान्यमेधाप्रज्ञादिनिरूपणेष्वद्भुत , भारतीयशोचनीयदशाघट्टे च परिस्फुरन् करुण अन्ये च यथायथ कृतावतारा रसभावाश्चैतस्यैव वीरस्याङ्गता भजन्ते ।

आदित प्रभृति आपरिसमाप्तिवैदर्भ्यैव रीत्या निरूढेऽस्मिन् काव्ये, तत्र तत्र संग्रथिता नैके अलकारा अपूर्वामेव कामपि सुषमा सवर्धयन्ति । विषयभेदेन विभिन्नरूपा तिलकस्य वाचारीति वर्णयन्नयं कवि श्लोकेऽस्मिन् उपमात्रय समाहरति—

"वज्रखण्डायिता काश्चित् काश्चिन्मुक्ताफलायिता ।
सुधाकणायिता· काश्चिद्वाचस्तस्य सभाङ्गणे ॥" 1-50 इति,

"स्रवन्तीव कृशा ग्रीष्मे स्मरणीयात्मवैभवा ।
प्रतियोज्या विपचीव दुर्गता सत्त्वविप्लवात् ॥" 1-59

इत्यादिना भग्नवैभवाया कृशस्रोतसा स्रोतोवहया, छिन्नतन्त्र्या च विपच्या उपमिन्वानोऽयं कवि आदिकवे सीतावर्णन स्मारयति ।

चतुर्थसर्गे तिलकषष्टिपूर्त्युत्सववर्णनप्रसङ्गे सन्निवेशिता उत्प्रेक्षा कवयितु भावनावैचित्र्य प्रकटीकुर्वन्ति । भारतावनि किलात्मन पुत्रस्योत्सवे दिविषद· आह्वातुं धूलीमिषेणोर्ध्वं गच्छति—

उत्सवागतजनौघसमुत्था धूलिपालिरसमा समभावि ।
हूतये दिविषदा भरतोर्वी प्रस्थितेव निजपुत्रमहोत्का ॥ 4-45

स्वर्णवर्णांकिता किलात्युच्छ्रिता ध्वजमाला देवाह्वानपत्रिका-पंक्तिरिव ददृशे । चित्राणि च किल पटमण्टपानि भूतलस्पृशा तेषा उपवेशनार्थं आस्तृतानि कुथानीव रेजिरे ।

"लोकमान्यचरितामृतगाथा स्वर्णवर्णखचिताध्वजमाला ।
उच्छ्रिता गृहशिखासु सुराणा हूतिपत्रनिवहा इव रेजु ॥ 4-6

नाकिना धरणिमस्पृशता तच्छ्रीक्षणेक्षणकुतूहलभाजाम् ।
आस्तरा विरचिता इव रेजुः कायमाननिवहा· पुरमध्ये ॥" 4-7

सस्कृतभाषासम्बद्धा भावाविष्करणरीति यथा सर्वास्वपि प्रान्तीयभाषासु समनुप्रविष्टा दृश्यते तथा तत्तत्प्रान्तीयभाषाविशेषाणा सङ्क्रमोऽपि प्रसरो स्वाभाविक एव । अत एव चात्र काव्ये नैकेषु स्थानेषु आन्ध्रभाषातुल्या प्रयोगा दृश्यन्ते । माण्टेगु मन्त्रिणा प्रतिज्ञात किल स्वपालन 'घृतकोशातकीसमम्' (నేతిబీరకాయ వంటిది) यत्र घृतस्य न गन्धोऽपि । (8–46) आग्लहैन्दवसोदर्य-ज्योतिष च (వారిమధ్య స్నేహముకలుగునని చెప్పిన జోస్యము) व्यर्थतामगमत् । अर्थात् तयोर्मध्ये सौहार्द सम्पद्येतेति भाविसूचन (Prophecy) व्यर्थमभूत् । (9–2) एव दयादाक्षिण्ये (9–20), महानाडम्बर इत्यर्थे 'महाट्टहास' (19–34) इत्यादय आन्ध्र-भाषायामेव प्रचुरप्रचारा प्रयोगा । कानिचिच्च तत्र तत्र प्रयुक्तानि आङ्ग्लपदानि सूचयन्ति यत् कविवरोऽय अभिप्रैति 'सस्कृतभाषया न केवल दान एव, आदानेऽपि सन्नद्धया भवितव्य येन अविच्छिन्ना अक्षय्या च तस्या पदसमृद्धिर्भवेत्' इति ।

> ''मनसाप्यनुमातुमक्षमैर्विभवैस्सेयमनुत्तमा पुरी ।
> सकलाऽत्र कलाभिसन्विता विधिना न्यायकला विनैककाम् ॥''
>
> 5–16

इत्यादिना मनसाऽप्यचिन्त्यवैभवाया लण्डननगर्या न्यायमाल-राहित्य वर्णयन्नय कवि ध्वनयतीव तस्या लङ्कापुर्युपमास् ।

तत्र तत्र भट्टबाण (8-51) श्रीहर्ष (17–1) भट्टमुरारि (19-36) कालिदासादीना कृतीना छायामनुसरन् कवितल्लजोऽय लोकमान्य-निर्याणवर्णनावसरे—

"तस्य तेन विलापेन दुद्रुवुः कठिनाः शिलाः ।
व्यवाशीर्यन्त वज्राणि सर्वमासीद्विचेतनम् ॥

सर्वे भावा रसास्सर्वे करुणारससागरे ।
नामरूपे विहायास्त गता निरवशेषतः ॥" 18-34, 36

इत्यादि च विलिखन् 'अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम्' 'एको रसः करुण एव' इत्यादीनि भवभूतेर्वचांसि स्मारयति ।

तदेवंविधरसभावपरिप्लुते नैकालङ्कारपरिष्कृते सर्वतः देशभक्तिसमुद्बोधकेऽस्मिन् काव्ये एकोनविंशस्सर्गः मुकुटायते । त्रिसप्तति श्लोकात्मके लोकमान्यमहिमानुवर्णनरूपेऽस्मिन् सर्गे एकैकोऽपि श्लोकः कवेः अपूर्वां कवितानैपुणीं प्रकटयति ।

अयमेक एव सर्गः कवेरस्य महाकविता सम्पादयितुमीष्टे इति नात्र सशीतिलेशोऽपि ।

तदेव लोकविदितैः विदितलोकैश्च श्री सूर्यनारायणशास्त्रिभिः सन्दृब्धः तत्तनयेन चास्मन्मित्रवरेण श्री वासा सुब्रह्मण्यशास्त्रिणा सम्पादितः प्रबन्धः 'नव्यायतेऽसौ मुहुरीक्षितोऽपि' ।

इति शम् ।

इत्थं,

डा. पुल्लेल श्रीरामचन्द्रः,
रीडर्- संस्कृतविभाग,
उस्मानियाविश्वविद्यालय ।

हैदराबाद्
21-6-1971

**Vidwan** **Kamala Nivas,**
Vasa Krishnamurti, B.A., B.ED. Srikakulam (A.P)

# A BRIEF LIFE-SKETCH OF THE AUTHOR

## Kavi Sirobhushana

## *SRI VASA SURYANARAYANA SASTRI.*

I feel it my singular good fortune to be the eldest son of Kavisirobhushana Late Sri Vasa Suryanarayana Sastri, author of this Samskrit Kavyam 'Sri Lokamanya Charitham' (the Biography of Sri Lokamanya Bala Gangadhara Thilak) As publisher of the Kavyam, I furnish a brief account of his life and activities.

The author was born of humble but pious parents Venkataramiah and Venkamamba in November 1882 in a small village in Srikakulam Dt (A P. He was their eldest son and after his early education in his village, he joined the Vedasaamajam Samskrit Pathasala at Salur. There Kavyakantha Vasishta Ganapathi Sastri was his chum Once, on a lunar eclipse day they both had taken a pious vow on the banks of river vegavathi to dedicate their lives to Samskrit so as to become poets in it and to prove that it is a language full of life and vigour The famous

Ganapathi Sastri glorified his name as the author of many Samskrit poetical works The author of this Kavyam had to give up his studies at the age of eighteen to shoulder the family burden Still, he studied Samskrit Kavyams and Valmiki Ramayanam intensively.

Sometimes after, he shifted his family to Lakshminarasupeta, a village in Srikakulam District and started there a Samskrit Pathasala Later, he joined as a Telugu Pandit in the then Rajah's college, Parlakimedi, a turning point in his life

There, he and late Dr G V Sithapathi Panthulu studied under late Rao Sahib G V Ramamurti Panthulu Thereby he imbibed the habit of a critical study and the art of logical argument

The first step in social reform began with the request of Mr P Swamy Babu, a prominent land lord of Narasannapeta to revive 'Upanayana Samskaram' in his Kalinga Vaisya community For this he prepared a book 'Pouranika Prayoga Paddhathi' on Sastraic lines He took an active part in the Modern Telugu Movement of G V. Ramamurti Pantulu by contributing articles and writing verses in Telugu.

This author was a deep Samskrit Scholar who always tried to wade with the time-spirit seeking sanction of Hindu scriptures He favoured the removal of untouchability launched by Mahatma Gandhi Those who heard him felt that a scholar of his type was needed to remove the traditional evils in society

As for charaka' favoured by Mahatma Gandhi he attached sanctity to it by composing 'Mathrupuja' in Samskrit incorporating a form of Charaka Vratham

Prescribing some 'Prayaschitham', he tackled the problem of reconversion into Hinduism of those that took the other religious He also advocated the remarriage of child widows with Sastraic sanction.

On behalf of the bill putforth by Sri Haravilasa Sarada advocating post-puberty marriages, this author addressed several gatherings in Andhra area The elite felt that he was well versed with the Dharma Sastras and interpreted them as sanctioning all modern progressive movements in social reform Later, he spent sometime in Calcutta and convinced most of the orthodox pandits and won them to his side He had an invitation from the 'Age of consent committee to go to Simla to substantiate his views before the committee.

His enthusiasm and earnestness in the cause attracted the attention of the present president of the Indian Republic His excellency Sri V. V Giri and his revered father, late lamented Sri V. V Jogiah pantulu, then a member of the central legislature They both took this author to Simla when the bill was on the anvil of the legislature There, he pleaded in support of the bill and had the satisfaction of seeing the bill passing into an Act

In the agitation of Andhra against the amalgamation of Parlakimedi into Orissa he wrote some emotional verses in Telugu about the stand of Andhras in Parlakimedi Prior to its amalgamation, he left Parlakimedi and after spending two years in a village, he shifted to Rajahmundry and stayed there for four years

His stay in Rajahmundry marked the beginning of his career as a Samskrit poet. For the 'Shashtipoorthi Mahotsavam' of Mahamahopadhyaya Tata Subbaraya Sastri he composed a Samskrit Kavyam 'Guru Dakshina' to pay homage to his Guru in Dharma Sastra. The celebrations committee published it in Davanagari script applauding it as a piece of fine poetry.

He next went to Madras and lived there for four years. On the sad demise of

Sri K. Nageswararao Pantulu he composed a Samskrit Kavyam, a life-sketch of the great Andhra leader. It was published in Devanagari script. Scholars opined that it was a record of the spontaneous outburst of feeling and an embodiment of deep emotion full of soft gliding verse and deep sentiment couched in choice expression

He then composed devotional verses in Samskrit 'Kapaleeswara Vibhuthi' on the famous Lord Kapaleeswara in Mylapore, Madras. In the foreword Dewan Bahadur K S Ramaswami Sastri remarked that "the very refrain 'Swamin ! Chandrakalavathamsa ! Bhagavan, Sambho ! Kapaleeswara ! has a charming and hunting melody. Every verse springs from a new and lively fancy which is worked out with much artistic skill which sets off natural touches" Dr. B Pattabhi Sitharamayya Pantulu, the then Governor of Madhya Pradesh highly appreciated the easy flow and charm of the verses and suggested the rendering of each sloka into Telugu poetry. The author did this in the second edition with the same ease and charm.

After a stay of four years in Madras he returned to Rajahmundry to live with his second son There, in the Ramakrishna Seva Samithi he used to give discourses on the Upanishads and

Geetha. In 1942, when he passed the age of sixty, he and my mother came to live with me in Srikakulam In 1943, Mr. P Swamy Babu of Narasannapeta requested him to live in his place, Narasannapeta alloting him a decent house and some land. The old couple enjoyed this benevolence for eighteen years During this period he used to deliver lectures on philosophical topics and on 'Ramavatharathathvam' in several places He was partly responsible for the starting of the Upanishanmandiram in Srikakulam where he often gave lectures on different topics

The author led a peaceful retired life in Narasannapeta and spent this time in literary work. He composed in Samskrit verse Kodanda-rama Mahatmyam' and then devotional verses 'Srinivasa Vibhuthi '

In 1949, his was the only contribution in Sanskrit verse to the 'Nehru Abhinandan Granth, The committee awarded him an hono-rorium expressing its appreciation.

In his old age' the author went to Banaras with his family Scholars there heard his 'Kapaleeswara Vibhuthi' The t p - most among them Mr. Subrahmanya Sastri, chief professor of Purvamimamsa was so much enamoured that he

translated each sloka in Hindi prose and prssented it to the author

Later, in 1956, at the request of Swami Sri Satyananda of Inamadgu he composed 'Tarakeswara Mahatmyam' For 'Sri Gayathri Sathrayaga held in Bombay he composed 'Gayathri Stuthi Ratnamala', published in the huge volume 'Oudcechya Jyothi'

He also started on a pilgrimage to Rameswaram There, he extolled 'Sri Ramalingeswara' in Samskrit verse and composed 'Sankaramala'. It was highly appreciated by the then Governor of Kerala Dr B. Ramakrishnarao and Kavisarvabhowmo, Kalaprapurna Sripada Krishnamurti Sastri.

The author attained his 75th year and it was time for the centenary celebrations of Lokamanya Sri Bala Gangadhara Thilak He prepared his master piece, the biography of Lokamanya as a Kavyam in Samskrit but the celebrations committee couldnot published it on the plea of late submission.

In March, 1961, my mother became sick, Then, both my parents came to live in Srikakulam with me. She felt that they did not go to Srisilam. To make amends, the author composed 'Sri Saila Mallikarjuna Suprabhatham.' He also

wrote verses on Viswakavi Tagore and on Pandit Motilal Nehru on the occassions of their centenary celebrations His verses on Tagore were published in Bharathiya Vidya Bhavan Journal, July 1962.

The author prepared an essay in Telugu on 'Ramavatharathathvam and Ramarajyam' where in he traced logically that Mahatma Gandhi followed the foot-prints of Sri Rama. For this essay he won the first prize and was awarded Rs. 116/- in the temple of Sri Varaha-narasimha Swamy Varu at Simhachalam by the then Minister for Religious Endowments A P) Sri Kalluri Chandra Mouli in August, 1961

By that time the author was also sick but my mother's pious desire to pass away before him was fulfilled on 13th August, 1961 Till the last day, the author was moving about and on the pious day Ekadasi in the dark fortnight of Karthikam (2nd December, 1961) he breathed his last. They left behind them three sons and three daughters and a number of grand children and their children

To Summarise his career, up to the age of fifty he took part in all progressive social reforms with Sastraic support. After that, he was busy as a poet. His poetry dealt with either

Hero-worship or worship of the lord.

Starting with the study of Valmiki Ramayanam he closed his career with his essay on 'Ramavatharathathvam'. He started his Sanskrit poetry with 'Gurudakshina' and closed it with 'Srisaila Mallikarjuna Suprabhatham' He won the title of 'Kavisirobhushana' and fulfilled his vow.

Now, coming to the publication side, this Sanskrit Kavyam is the biography of Sri Lokamanya, a great Samskrit scholar, the expounder of the hidden secrets of Bhagavadgitha' The author availed the centenary celebrations and to sanctify the name and fame of Lokhamanya he composed it in the celestial language, Sanskrit. It is a homage paid on behalf of Andhras to an outstanding personality in the History of Independent India and the foremost leader hf the freedom struggle whose slogan was 'Swaraj is my birth-right, Somehow, the book remained unpublished

This year, on my application, the Andhra Pradesh Sahitya Akademi granted Rupees Five hundred With grateful thanks to the Akademi I launched on this publication

With Pranamams, I offer my humblest thanks to our beloved Rashtrapathi, His Ex-

cellency Sri Sri Sri V. V Giri for the gracious permission to mention a reference in the l fe-sketch.

I now breath a sigh of relief that I could discharge my filial duty, though long overdue, in which my youngest brother Sri Vasa Subrahmanya Sastri, Lecturer in Telugu, A M A L College, Anakapalli had his share in editing and supplying faotnotes where necessary. I deem it a happy augury to publish the book on Ekadasi in the month of Margasirsham as the author passed away on Ekadasi in the dark fortnight of Karthikam and as the auspicious month of Margasirsham is Lord Sri Krishna himself

Srikakulam
24-12-1970

VASA KRISHNAMURTY
Publisher.



ॐ

# "श्री लोकमान्यचरितम्"

## अथ प्रथमः सर्गः ।

श्लो ।। अस्ति कश्चिन्महाराष्ट्रनामा जनपदो महान् ।
ऊर्जस्वी दक्षिणो बाहुर्भारत्या भूरिभास्वर ।। १

नदीमातृकया सस्यसम्पदा तुष्टिपुष्टिकृत् ।
फलपुष्पोपगैर्वृक्षैस्समन्तादुपशोभित ।। २

वीरलक्ष्मीविहरणकल्याणारामवाटिका ।
वाणीलीलावतरणदिव्यसोपानपद्धतिः ।। ३

पूना नाम पुरी यस्य माणिक्यमकुटायते ।
यत्र सन्निहिता देवी भवानी भक्तवत्सला ।। ४

ओजस्तेजो धृति दाक्ष्य यश प्राभवसम्पदम् ।
विद्या बुद्धि श्रिय दीप्ता सर्वलोकमहत्तया ।। ५

दिशन्ती निजपादाब्जभक्तानामधिकाधिकम् ।
तस्मिन् जनपदे जज्ञे शिवतातिश्शिवाशभूः ।। ६

श्लो ।। शिवाजिर्मातृभूशत्रुसमुच्चाटनमान्त्रिक ।
अद्वितीयमहाशूरो जितकाशी गुणोज्ज्वल ।। ७

बालाजिविश्वनाथायौ तथाविधगुणोज्ज्वलौ ।
तैस्त्रिभिर्भरिती भूमिर्वीरसूरिति विश्रुता ।। ८

महाराष्ट्ररमारत्नरशनादाममध्यगम् ।
महारत्नमिवाभाति पावन परमाद्भुतम् ।। ९

पुर रत्नगिरिर्नाम महापुरुषजन्मभूः ।
तदिद पुरमध्यास्ते ब्रह्मवशोऽतिपावन ।। १०

पञ्चद्राविडभूदेवशाखासु प्रथितो महान् ।
श्रीचित्पावनविख्यात तिलकाख्यानलाञ्छन ।। ११

अत्र सजज्ञिरे धीरा महोदारा महाशया ।
चारित्र्यव्यपदेशाढ्या जगत्कल्याणकामना ।। १२

तेषा महत्तरो जज्ञे वशकर्ताऽनघश्शुचि. ।
श्रीलक्ष्मीकेशवो नाम क्षीराब्धाविव कौस्तुभ ।। १३

तस्माज्जातावुभौ पुत्राविन्द्रोपेन्द्राविवाञ्चितौ ।
श्रीरामचन्द्रबल्वन्तकाशीनाथेति विश्रुतौ ।। १४

तयोश्च प्रथमाज्जज्ञे गङ्गाधरपदादिम ।
श्रीरामचन्द्रतिलक त्रिशुक्ल· कुलदीपक ।। १५

गुणैस्तुलितपार्वत्या पार्वत्या गृहमेधिराट् ।
वृत्तिमाध्यापकीम् वव्रे पूता स गुणदोषवित् ।। १६

श्लो॥ तौ दम्पती सुपुत्रार्थं तेपाते तप उत्तमम् ।
परमेशानमुद्दिश्य यथा वाऽदितिकश्यपौ ॥ १७

तयो पुण्यपरीपाकात्पुत्र परपुरञ्जय ।
महेशांशेन सजज्ञे सर्वलोकोत्तरद्युति ॥ १८

राक्षसे नाम भव्याब्दे रक्षोवृत्तभयकरे ।
आषाढे कृष्णपक्षस्य पञ्चम्यामिन्दुवासरे ॥ १९

ग्रहाणा शुभसस्थानमङ्गप्रत्यङ्गसौष्ठवम् ।
महापुरषचिह्नानि दृष्ट्वा हृष्टमना पिता ॥ २०

गङ्गामिव महादेवो भारत्या धुरमूर्जिताम् ।
धरिष्यति कुमारोऽसाविति मत्वा नु दूरदृक् ॥ २१

बालगङ्गाधराभिख्यामन्वर्थां स चकार ह्रा ।
जातकर्मादिसस्कारान् यथाकाल यथाविधि ॥ २२

चकार रामचन्द्रार्य तस्य पुत्रस्य हृष्टधी ।
पितृभ्या सदृश सर्वैर्लाल्यमानस्स बालक ॥ २३

श्रीवाणीगिरिजातुल्यसोदरीभिस्समन्वित ।
ववृधे भारतीवृध्द्यै तैस्तैर्मधुरचेष्टितै ॥ २४

महेशांशानुभावेन न किञ्चिदपचेष्टितम् ।
बालभावेऽपि तस्यासीदबालपथवर्त्तिन. ॥ २५

निजमातु स्तन्यसुधा भारतीमातुरेव च ।
पपौ युगपदेवाऽसौ द्वैमातुर इवाऽपर ॥ २६

श्लो ।। वाल्येऽप्यबालवच्चेष्टा कुर्वन्निचुलिता गुणै ।
पश्यता जनयन् हर्ष ववृधे वृद्धसम्मत ।। २७

सुधावर्ति दृशोर्धृत्वा माता पुत्र ररक्ष हा ।
तेन पुत्रेण शुशुभे सर्वलोकशुभार्थिना ।। २८

यथाऽदितिर्महाभागा पुरुहूतेन वज्रिणा ।
कुमारेण यथा गौरी प्रद्युम्नेन यथा रमा ।। २९

पुरन्ध्रीभिश्शुभास्तस्य कुर्वाणाऽभ्युदयक्रिया ।
सा मुदा दशवर्षाणि लालयन्ती सुत तत ।। ३०

भवान्या भवहारिण्या विलिल्ये स्वेष्टदैवते ।
रामचन्द्रो महाधीर धर्मपत्नीवियोगजम् ।। ३१

कथमप्युद्वहन् शोकमन्तरेव शमी यथा ।
विस्मारयन् त जननी द्विगुणीकृतलालनै ।। ३२

पुत्र सवर्धयन् कञ्चित व्यनैषीत्समय बत ।
उपनीय यथाकाल तनय विनयोज्ज्वलम् ।। ३३

तस्याधीतिप्रबोधार्थैर्विशिष्टैर्मुमुदे गुणै ।
सप्राप्ते षोडशे वर्षे तस्य सयमिनाँ वर ।। ३४

सर्वसङ्गान्परित्यज्य मातृहीन च पुत्रकम् ।
पुनरावृत्तिरहिते शिवलोकेऽमहीयत ।। ३५

बालोऽप्यबालवद्धीर मात्रा पित्रा वियोजित ।
सर्वात्मना स विद्यासु हृदय निदधे सुधी ।। ३६

श्लो ।। गतजन्मानुबन्धेन देवी भगवती गिराम् ।
उपदेशमिषादस्मिन् चक्रे वसतिमूर्जिताम् ।। ३७

झडित्युत्तरयन् प्रश्नान् वाचैव गणितागमे ।
व्यस्मापयदुपाध्यायान् कक्ष्यासु स कुशाग्रधी ।। ३८

ऋतुपर्णस्य राजर्षेर्गणितागमकौशलम् ।
प्रादर्शयदसावेकस्सर्वविस्मयभाजनम् ।। ३९

उपदिष्टार्थविवृतिरहस्योद्घाटनादिभि ।
व्यनीयन्तेव गुरव तेनाद्भुतमनीषिणा ।। ४०

स विद्यार्थिदशाकाले गैर्वाण्या विबुधैस्सह ।
मातुर्विलापमुद्दिश्य श्लोकान विरचयन् द्रुतम् ।। ४१

बहुमान प्राथमिक जग्राह परमादृत ।
न केवल स विद्यासु कलासु परिनिष्ठित ।। ४२

सगीतसाहितीपूर्णस्तनाभ्या नि सृता सुधाम् ।
पपौ सम गिरा देव्या प्राग्जन्मोदितवासन ।। ४३

गङ्गामप्यतरद्दोर्भ्या प्लवने धृतकौशल ।
देहशक्ति पुपोषाशु व्यायामे कृतकौतुक ।। ४४

गच्छता समयेनासावुत्ततार सुधीवर ।
"यल् यल् बी" ति परीक्षाँ ता, पट्टभद्रो व्यराजत ।। ४५

नापठन्न्यायशास्त्राणि परीक्षोत्तीर्णताकृते ।
तन्मूलसूत्रसाराशान् जिज्ञासुरपठत्सुधी ।। ४६

श्लो ।। धीचातुरी समीक्ष्यास्य केचिदध्यापका हृदि ।
असूया लेभिरे तद्धि किं स्यात्तस्यापचेष्टितम् ।। ४७

यावती वैदिकी विद्या यावद्गीर्वाणवाङ्मयम् ।
यावान्विज्ञानसर्वाभिसारस्त चकमे स्वयम् ।। ४८

मृणालसूत्रप्राय च विषय शितया धिया ।
भित्त्वा सार सङ्ग्रहीतुमल गङ्गाधरस्सुधी ।। ४९

वज्रखण्डायिता काश्चित् काश्चिन्मुक्ताफलायिता ।
सुधाकणायिता काश्चिद्वाचस्तस्य सभाङ्गणे ।। ५०

तत्तद्विषयभेदेन तत्तद्रूपाश्चकाशिरे ।
विद्या समाप्य स सुधीर्गार्हस्थ्ये धृतकौतुक ।। ५१

सत्यभामाभिधा कन्या, पत्नी चक्रे यथाविधि ।
श्वशुरात्प्रतिजग्राह पुस्तकान्येव दक्षिणाम् ।। ५२

सरक्षिणे पितृव्याय गोविन्दाय पितु परम् ।
आत्मनो दायसर्वस्व ददौ दाक्षिण्यशेवधि ।। ५३

कल्याणगुणगुच्छानामेकोन्मीलनमञ्जुल. ।
बालगङ्गाधरो रेजे शीलचारित्रभूषण ।। ५४

तत पर्यटितु देशानारेभे विविधानसौ ।
भारत्या दुर्दशा पश्यन् दध्यौ निर्विण्णचेतन ।। ५५

अहो बत ! महाघोर वैरूप्यमुपपादितम् ।
सर्वसपन्नभारत्या खण्डान्तरसमागतै ।। ५६

श्लो ।। श्वेतजातिभिरत्यर्थं स्वार्थसपोषणादृतै ।
स्वर्लोकखण्डिकेवासीत् या पुरा मातृभूरियम् ।। ५७

क्षीणा हीना कृशोद्विग्ना दीनेव परिदृश्यते ।
विरूपरूपा विषमामवस्थामवलम्बिता ।। ५८

स्रवन्तीव कृशा ग्रीष्मे स्मरणीयात्मवैभवा ।
प्रतियोज्यविपञ्चीव दुर्गता सत्वविप्लवात् ।। ५९

कथ नाम सुयोज्या स्याद्भारती पुत्रकोटिभि ।
यद्यस्ति चित्तमस्माक स्मरता पूर्ववैभवम् ।। ६०

कथ तन्न विदीर्येत शतधा च सहस्रधा ।
विनता मोचिता दास्याद् गरुडेनैकसूनुना ।। ६१

अनेककोटिसख्याकान् धिगस्मान्मातृनि स्पृहान् ।
इत्येव प्राक्तनी लक्ष्मी सर्वतोमुखवाहिनीम् ।। ६२

स्वातन्त्र्यविरहाद्दीना स्मारस्मार विषण्णधी ।
स्रवद्बाष्पाम्बुनयन चक्रे निश्चयमात्मनि ।। ६३

सर्वशक्त्या सर्वविधैरुपायैर्धीरसम्मतै ।
मातृदास्यविमोक्षाय यतिष्ये जीवितावधि ।। ६४

पतेय पावके घोरे पिबेय विषमुल्बणम् ।
त्यजेयम् भोगभाग्यानि सहेयापत्परपरा ।। ६५

अकार्य नास्ति मे किंचित् मातुरर्थे त्रिशुद्धिभि ।
येय राजन्वती पूर्व क्षत्रियैर्धर्मपारगै ।। ६६

श्लो ।। सेय विजातिभिश्शोच्या दुर्दशा लम्भिता पराम् ।
वीरपत्नी या पुराऽभूत् वीरसूरपि या पुरा ।। ६७

अनाथा वापि वन्ध्या वा नेय भवितुमर्हति ।
अभारतार्था यदि मे जायेत हृदि कामना ।। ६८

दह्यात्ता तत्क्षण तत्र जाठरो हृव्यवाहन ।
पुत्रापसदकौलीन न सहेय च शाश्वतम् ।। ६९

इति सचिन्त्य बहुधा बालगङ्गाधरस्सुधी ।
मातृदास्यविमोक्षैकदीक्षाया दीक्षितोभवत् ।। ७०

स बालगङ्गाधरधीरमौलि
स्वमातृभूदास्यविमोचनार्थी ।
ताक्ष्यायमाणो रुरुचे, श्ववृत्तिम्
सुपुष्कलार्थामपि नाचकाक्ष ।। ७१

इति श्रीलोकमान्यचरिते बाल्यं अध्ययन चेति प्रथम सर्ग ।

---

## अथ द्वितीयः सर्गः

श्लो ॥ सनातने धर्मपथे निविष्टा
पुरातनीं भारतभाग्यलक्ष्मीम् ।
विचिन्त्य गाढ मनसा न्यमज्जत्
विचारवाराबिधिगर्भगोले ॥ १

गजाभिपन्ना नलिनीव सेय
पुराभिभूता प्रविनष्टरूपा ।
यतेमहि प्राक्तनसम्पदर्थम्
माभूम पुत्रापसदाश्चिराय ॥ २

अध्यापन पैतृकवृत्तिमादौ
जग्राह केन्द्रीकृतचित्तवृत्ति ।
पराधिकार निजमातृभूमा
मसौ न सेहे तिलकोऽतिधीर ॥ ३

'आगारकारि' त्यभिनन्द्यवृत्ते
स्सख्युस्सुसाह्य समवाप्य धीर ।
प्रस्थापयत्काञ्चन पाठशालां
प्रभुत्वसाहाय्यनिराकृतोऽसौ ॥ ४

श्लो ।। स्वातन्त्र्यबीजैरुपगूह्यमानान्
विद्याविशेषान्निजशिष्यपङ्क्ते ।
गुरूत्तमौ तावुपदिश्य सम्य
गादर्शभूतौ सुहृदावभूताम् ।।

अत्रान्तरे स्वीयमतानुयायि
श्रीकृष्णचिप्लकरुधीरमौलेः ।
विद्याविवेकादिभिरिद्धकीर्ते
रलाभि साहाय्यमुदारवृत्ते ।।

पूनानगर्या त इमे सुधीरा
आग्लेयविद्यानिलय नवीनम् ।
अस्थापयन् स्थापितचित्तवृत्ता
स्वातन्त्र्यसपादनयोगमार्गे ।।

एतत्त्रयाणा गुरुसाह्यहेतो
"आप्टे" च "जोषी" प्रथितानुभावौ ।
अध्यापकौ स्वैरमुभ वभूता
तन्नूत्नपाठालयसविभागे ।।

ते पाण्डुपुत्रा इव पञ्च धीरा
प्रज्ञाविशेषेण परार्थवृत्त्या ।
त्यागेन धैर्येण गुणैश्च तैस्तै
अन्योन्यसाम्योपगता विरेजु ।।

श्लो ।। तेनाग्लविद्यानिलयेन साकं
ते 'केसरी' मर्थवती 'मराटाग्' ।
द्वे पत्रिके निर्भयसद्विचारे
प्रचारयामासुरुदारवृत्त्या ।। १०

महाजनोपज्ञतया प्रवृत्ते
स्वमातृभूदास्यविमोचनार्थे ।
ते पत्त्रिके सर्वजनानुमोद-
पात्रे ह्यभूतामचिरेण देशे ।। ११

ज्ञानं च विज्ञानकला च धैर्यं
स्वमातृभूदास्यविमोक्षदीक्षाम् ।
प्रबोधयन्त्यावुचितैरुपायैः
राग्लेयचित्तेषु भयं व्यधत्ताम् ।। १२

कोल्हापुराधीशितुरार्यवृत्ते
शिवाजिनाम्नो नृपतेस्तदात्वे ।
आग्लेय "रीजटु" कृतावमानं
न सेहिरे ते प्रथितानुभावा ।। १३

प्रचार्यं त पत्त्रिकयोरभूवन्
आगस्विनो न्यायसभास्थले ते ।
श्रीकृष्णचिप्लकररुराभियोग
मध्ये परं धाम जगाम दैवात् ।। १४

श्लो ।। आगारुकारस्तिलकश्च बद्धौ
कारागृहे तौ त्रिशत दिनानि ।
न नाम किञ्चिद्व्यथित तयोस्स
दण्डो व्यतानीत् सुपरार्थवृत्त्यो ।।

'आप्टे' च 'जोषी' समुपोढभारौ
विद्यालय प्रागिव पत्त्रिके द्वे ।
सचालयामासतुरात्मशक्त्या
तेषा चतुर्णा द्युतिरुज्जजृम्भे ।।

गङ्गाधरस्यात्मविभूतिसार
परार्थवृति सुसहिष्णुता च ।
आरेभिरे स्तोतुमशेषलोका
पातस्सतामुत्पतनेन तुल्य ।।

उत्तीर्य कारागृहवासदण्ड
सभाव्यमानौ स्वजनैरमोघम् ।
सगत्य तत्पूर्वसखिद्वयेन
स्वकार्यभार पुनरूहतुस्तौ ।।

ततस्त एते महितानुभावा
'डक्कन् सुविद्यासमिति' महार्थाम् ।
अस्थापयन् गाढतरप्रवृद्ध-
तमोपहत्यै भरतप्रजानाम् ।।

श्लो ॥ तया समित्या समवेक्षणीयां
फर्गूसनाख्याविदिता कलानाम् ।
शाला विशाला सुविशालभावा
सस्थापयामासुरनर्घशीला ॥ २०

अध्यापकी वृत्तिमुपेत्य तत्र
यत्किञ्चिदर्थेन सुतृप्तिभाज ।
आर्षेयविद्याञ्चितरम्यमार्गे
प्राचालयन् ता प्रथितास्त एते ॥ २१

प्रभुत्वसाहाय्यमपेक्षणीय
न वेति तेषामुदभूद्विवाद ।
निषेधवादी तिलकोल्पसख्य
जहौ निजाध्यापकवृत्तिमात्रम् ॥ २२

परप्रभुत्वाधिकृतिप्रसक्ति
सवर्धनी भारतदास्यवृत्ते ।
स मानिना प्राग्रसरो मनीषी
स्बदेशविद्यानिलये न सेहे ॥ २३

अध्यापकाना सुहृदा समेषा
दूरीभवन् सोऽ्यमनर्धतेजा ।
अन्यत्र विद्यानिलयात्प्रवृत्या
प्रचक्रमे स्वेष्टविधीन्विधातुम् ॥ २४

श्लो ।। स्वसघसस्कारधृताभिलाषात्
प्राचीनमत्यन्तनव च सर्वम् ।
प्राश्चिमोत्थ विरवाङ्मयाब्धि
मामूलचूड स सुधीर्ममन्थ ।।

सुनिश्चितार्थान् कृतधीर्विकृण्वन्
हिन्दूमतस्यैव पुरातनत्वम् ।
मतान्तराणामिदमेव मूल
मत्रैव सर्वोपरम जगाद ।।

पाश्चात्यसम्मानमपेक्षमाणा
हिन्दूमतस्यास्य कृताभिमर्शा ।
जत्पन्तु केचित्सुविमर्शदूरा
न ते प्रमाण मतमेतदाद्यम् ।।

रागादिदोषैरभिहन्यमानै
कलङ्किता कश्चिदिय मतश्री ।
सस्कृत्य शास्त्रीयपथेन सम्यक्
पुरोभिगन्तु सहसा यतिष्ये ।।

इत्यन्ततो निश्चितचित्तवृत्ति
चक्रे विवाह रजस परस्तात् ।
स्वकन्यकाया विधिदृष्टमार्गे
श्रुतिस्मृतीनां स रहस्यवेदी ।।

श्लो ।। अस्पृश्यतादोषकलङ्कपङ्क
प्रक्षालयामास स दूरदर्शी ।
लोकद्वयीक्षेमविधानदक्षान्
प्रमाणयन् शास्त्रविशालभावान् ।। ३०

स ज्यौतिष शास्त्रमगाधसार
मङ्गैरुपाङ्गैस्सह वेदराशिम् ।
सम्मथ्य चग्राह च तद्विशेषान
प्राचीकशत्तेषु जरातनत्वम् ।। ३१

आगारुकारस्तिलकाशयाना
प्रतीपमार्गेण 'सुधारिका' रव्याम् ।
सुपत्रिका नव्यतरा प्रचाल्य
तैस्तैर्विशेषैर्बिभिदे स तेन ।। ३२

आगारुकारप्रधिया विसृष्टाम्
ता 'केसरी' सुप्रचुरा 'मराटाम्' ।
स निर्वहन् नव्यतरैर्हि मार्गै
बहूपचक्रे भरतप्रजानाम् ।। ३३

न्यायप्रबोधाय सुसूक्ष्ममार्गै
अस्थापयत्काञ्चन पाठशालाम् ।
उपादिशत्प्राञ्चितया तयाऽसौ
प्राचीनशास्त्रीयरहोविशेषान् ।। ३४

श्लो ।। आयु प्रवाहे स तुषारमेक
वृथा न निन्ये कृतिना पुरोग ।
स्वमातृभूदुर्भरदास्यबन्ध-
विमोक्षसत्राध्वरदीक्षितात्मा ।।

'बापट्टु' नाम्नो निजमित्रमौले'
बरोडराज्येऽधिकृतस्य दैवात ।
मुधाभियोगे पतितस्य साह्य
कृत्वा विजिग्ये प्रथितात्मशक्ति ।।

आपत्सु मित्रस्य विधेयकृत्य
विधाय सद्भि परिगीयमान ।
न्यायप्रबन्धे प्रथितात्मशक्ति
र्व्यराजतादित्य इवांसुमाली ।।

नौरोजिमुख्यै निजदेशनाथै
सस्थापिते भारतभाग्यकन्दे ।
जातीयसघे स्वपद वितेने
कथ स तादृक्पदवी बिजह्यात् ।।

द्वित्राब्दमध्ये विधृतप्रतिष्ठ
स दक्षिणे भारतभूविभागे ।
जातीयसघीयप्रधानकार्य
दर्शित्वमासाद्य पर विरेजे ।।

श्लो ।। मुम्बाप्रदेशीयसभा समग्रा
मापञ्चवर्ष प्रविचाल्य सम्यक् ।
स राजतन्त्रेषु विशिष्टशक्ति
प्राचीकशत् विस्मयनीयकृत्य ।। ४०

मुम्बापुरीशासनकृत्सभाया
सभ्यत्वमासाद्य दशाब्दकालम् ।
प्रजोपयुक्तानि बहूनि चक्रे
कार्याणि कार्यान्तिरमर्मवेदी ।। ४१

स विश्वविद्यालयसविभागे
मुम्बापुरीवर्तिनि लब्धवृत्ति ।
विद्याप्रणालीपरिशोधनाद्यै
बिद्यार्थिलोकस्य बहूपचक्रे ।। ४२

पूनापुरीपालकसभ्यभाव-
मासाद्य यद्यद्विदधे पुरस्य ।
क्षेमाय योगाय च तत्प्रजाना
तद्वर्णन भूरिकथाप्रबन्ध ।। ४३

तदा नु पूनानगरे स्वजाति
महासभाया प्रविचालितायाम् ।
स्वसधसस्कारमहासभा च
कर्तुं समैच्छन् बहवोऽनुबद्धाम् ।। ४४

श्लो ।। तयोस्समित्योरनुबन्धवृत्ति
न चक्षमेऽसौ बहुदूरदर्शी ।
सत्कार्यदर्शित्वपद विहाय
बहिर्ययौ कृत्यविदग्रयायी ।।

तथापि साहाय्यमनन्यलभ्य
मनन्यभावेन विधाय तस्या ।
पुरेव जातीयमहासभायाः
प्राचीकशन्नैजमुदारभावम् ।।

निर्वीर्यभाव निजमातृभूमेः
निरस्य तेजोधृतिवर्धनाय ।
शिवाजिलोकातिगवीरमौले
र्महोत्सव कर्तुमसावियेष ।।

श्रीरामकृष्णाद्यवतारमूर्ति
महोत्सबानण्यतिलघ्य भूम्ना ।
श्रीरायगड्दुर्गसमाधिमूले
प्रावर्ततायो महितोत्सबोऽसौ ।।

'औरगजेव' पालनधोरगाधा
शिवाजि लोकोत्ररवीरगाधा ।
सस्मृत्य सस्मृत्य प्रबुद्धचित्ता
प्रजास्समासन् प्रमदोपगूढा ।।

श्लो ।। तेनोत्सवेनाद्भुतवैभवेन
प्राचीनतेजोमयबीजपुञ्जा ।
उद्भिद्य चेतांसि तदा प्रजाना
अङ्कूरिता भारतभक्तिसिक्ता ।। ५०

गणाधिनाथस्य महोत्सव च
समुद्दधार प्रथितप्रभाव ।
ताभ्या महाभ्या जगति प्रबोधः
तेजोवृत्तिर्नव्यतया प्रबुद्धा ।। ५१

मारीति रोग प्रचुरस्तदानी
कुक्षौ प्रजालि निदधेऽतिघोरम् ।
सोऽय दयालुर्बहुधोपचक्रे
निजप्रजाना पितृमातृकल्प ।। ५२

गङ्गाधरस्योर्जितसाहसस्य
दयासुदाक्षिण्यसुधाम्बुराशे ।
परोपकारप्रवणात्मवृत्ते
ज्योत्स्नायितासीद्यशसो विभूति ।। ५३

आह्लादयन् सर्वदृदन्तराणि
राकासुधासुप्रतिमो बभासे ।
निरस्य चाज्ञानतमो जागत्या
व्ययोततादित्य इव प्रकामम् ।। ५४

श्लो ।। परप्रभुत्वासहन तदेक
विमृश्य गङ्गाधरपूर्णचन्द्रे ।
कलङ्क इत्येव समाचचक्षे
दोषैकदृक् शत्रुगणोऽप्यमर्षी ।।

'र्याण्ड्' स्तथैरष्ट इति प्रतीता
वाङ्गलेयनाथौ निहतौ नु कैश्चित् ।
स्वीयप्रतिष्ठापरिरक्षणाय
दोषोऽयमस्मिन् प्रभुभिर्न्यधायि ।।

स दण्डितोऽष्टादशमासकाल
कार्पण्यदोषेण विनापराधम् ।
स्वभाव एवैष परार्थवृत्ते
विपत्समापत्तिरितस्थतौऽपि ।।

शर्मण्यदेसीयविपश्चिदग्रणी
स मोक्षमूलाभिधतत्त्ववेत्ता ।
'हा ! भारताकाशसहस्ररश्मे
कारागृहावास' इति प्रखिद्य ।।

'विक्टोरिया' तामनुनीय राज्ञी
तदाज्ञया त तिलकस्य दण्डम्।
व्यपोह्य लोकस्य समस्य सोऽय
लेभे प्रशसामयपूर्णपात्रम् ।।

श्लो ॥ प्रारब्धकार्याणि पुरेव कर्तु
मुपोढभारे तिलके॓ऽतिवेलम् ।
पपात तन्मूर्ध्नि दुरन्त-
कार्यघट्टोऽपरो दुर्विधिदुर्विपाकात् ॥ ६०

मित्रस्य बाबाभिध राजमौले
विज्ञापनात्तन्मरणान्तकाले ।
कुटुम्बसर्वार्थपरीक्षणार्थं
पत्राधिकार जगृहे य धीर ॥ ६१

अनन्तर तस्य तदङ्गनाया
समीहया कञ्चन दत्तपुत्रम् ।
विधाय तत्सर्वकुटुम्बरक्षा
निर्वाहयामास निरीहयाऽसौ ॥ ६२

दुर्मन्त्रणैस्सा विधवा तदेतत
भर्तु स्वहस्तार्पितशासनादि
प्रकल्पित तेन दुरीहयेति
महान्नियोग तिलके बबन्ध ॥ ६३

तन्मण्डलन्यायपतिस्तदेतत्
विचार्य विज्ञाय च सर्ववृत्तम् ।
ईर्ष्याबशात्तेन तु भोग्यमेन
कारागृहावासममस्त चित्ते ॥ ६४

श्लो ।। स दोषिताङ्गीकृतिपत्रदानात्
दण्डो न ते स्यादिति बोधितोऽपि
न्यायाधिनाथेन स धर्ममानी
नाङ्गीचकारात्मवधोपम तत् ।।

स दण्डितोष्टादशमासकाल
ऊर्ध्वाभियोग विदधे स धीर ।
तन्न्यायनाथस्सुविचिन्त्य सम्यक्
अकुट्टयत् पूर्वकृत नु दण्डम् ।।

आदावसत्यस्य जयस्तदन्ते
सत्यस्य चेति प्रथिताहि सूक्ति.
तथोत्तमे न्यायपदे स लब्ध्वा
जय सुमानिप्रवरो विरेजे ।।

घट्टान् दुरन्तान् नगराज धीर
शीर्षोपरिष्टात् पतितान् सहिष्णु ।
स्वमातृ भूदास्य विमोक्षदीक्षा
नैवाक्षिपत्तत्फलपारगामी ।।

वङ्गीयराष्ट्रस्य रमा विभज्य
द्विधाहि 'कर्जन्' प्रभुरुज्जजृम्भे ।
शिर प्रहारप्रतिम विभाग
मेन न सेहे भरतावनीयम् ।।

श्लो । एकोन्सुखीभूय प्रतिक्रियार्थं
सर्वात्मना नैजकटिं बबन्ध
कालाग्निहालाहलदुर्विषह्य
प्रजोद्यम भेत्तुमनन्यमार्गा ॥ ७०

उन्मत्तभूता प्रभुता प्रकोपात्
चक्रेऽतिघोराद्भुत शासनानि ।
कारानिबद्धा जनताऽतिवेल
बह्यव् प्रजा मृत्युमुख प्रविष्टा ॥ ७१

'काल' नाम वार्तावहपत्रिकाया
'परजपो' नाम पतिर्महीयान् ।
गङ्गाधरस्याप्रतिमानमित्र
विचार्यते द्रोहितया तदाल्वे ॥ ७२

श्रुत्वा तदेतत्तिलकोऽतिधीर
गत्वा च मुम्बाख्यपुरी तदानी
कुर्वन् सुसाह्य निजमित्रमौले
द्रोहीति कृत्वा प्रभुभिर्निबद्ध ॥ ७३

सखाऽपि सन् न्यायपतिर्हि देवर
स्वार्थाहतो दोषितया तमेनम् ।
निर्णीय कारागृहवासदण्ड
षड्वत्सरान् क्रूरतथा विदध्यौ ॥ ७४

श्लो ।। मुधाभियोगीय विचारणा सा
प्रहास आसीत् प्रभुतानुरोधात् ।
न न्यायलेशो न च युक्तिवाद
प्रभुत्वपक्षे कलयाऽपि लब्ध ।।

स दूरभूमौ बत माण्डलीये
कारागृहे धीरवरो निबद्ध ।
तदेव लोकस्य समस्य पश्चात
ससारबन्धस्य बभूव मुक्त्यै ।।

स दण्डमाप्यैवमथो महात्मा
न चुक्षुभे धीरतरप्रवृत्ति ।
जञ्भानिलेनापि बिवृद्धिभाजा
नगाधिराजस्य न किञ्चिदेव ।।

बद्धस्स एव जगदेकमान्य
लोकस्य सर्वस्य चिरोर्जितस्य ।
ससारबन्धस्य विमोक्षणाय
गीतारहस्य रचयाम्बभूव ।।

श्रीकृष्णगीतोपनिषद्विभूते
तादृङ्निगूढार्थनिवेदिटीका ।
अदृष्टपूर्वाऽश्रुतपूर्विका च
सैवोपमा नान्यतरास्ति तस्या ।।

श्लो ।। कारागृहावासदुरन्तकाले
सत्याभिधा स्वस्य सतीमतल्ली ।
स्वर्गं जगामेति निशम्य वार्तां
न विव्यथे ब्रह्मविदा वरिष्ठ ।। ८०

दण्ड समग्र त्वनुभूय धीर
स राहुनिर्मुक्त इवाशुमाली ।
व्यभ्राजत प्रागिव दीक्षितात्मा
लोकस्तमीशाशममस्त भूय ।। ८१

अथ विगलितबन्धोऽप्यात्मना स त्रिवार
परविभुक्तबन्धान् चक्षमे निर्विकारम् ।
निजजनधृतबन्धान् छेत्तुमभ्युत्थितात्मा
विगलित सकलेहावृत्तिरध्यात्मदीप ।। ८२

इति श्रीलोकमान्यचरिते जातीयभावना, कारागार
वासश्चेति द्वितीय सर्ग ।।

---

## अथ तृतीयः सर्गः ।

श्लो ।। प्राचीदिङ्मुखमण्डलोदितमहातेज प्रसारै र्जगत्
गाढध्वान्तनिराकृतिप्रति भुव वेदत्रयीविग्रहम्
चैतन्यप्रदमर्यमाण मसकृत् श्रीबालगङ्गाधर
स्तावस्ताव मभिष्टुवन्ति बहुधा भूलोकभाज प्रजा ।। १

कारागारविमुक्तिरस्य जननीगर्भोदयोऽभूत्पुन
षड्वर्षाण्यनुभूय कष्टविततिं को नाम जीविष्यति
इत्येव बहुधा विचिन्त्य जगतोलोकातिगात्मप्रभा-
विभ्राज समपूजयत् त्रिकरणैश्श्रीबालगङ्गाधरम् ।। २

शृण्वन् ता स्तुतिभारती श्रुतिसुखा श्रीबालगङ्गाधर
देशक्षेमविधायिकार्यविभवे प्राग्वन्निमग्नान्तर
अस्मिन्नन्तर एव घोरविधया युद्धक्रिया प्रस्तुता
जर्मन्याङ्गलदेशयो रविरता तत्कालरात्रिस्फुरा ।। ३

इत्थ प्रज्वलति प्रभूतविषमक्रूरान्तरे सङ्गरे
क्षीणक्षीणतया ब्रिटोषुविषये निर्विण्णभाव गते
किं कर्तव्यमिति प्रसन्नहृदयेनोद्वीक्ष्य गङ्गाधर
साह्य कर्तुमियेष भूरिविधया स्वाङ्गलप्रभुत्वश्रिय ।। ४

श्लो।। अर्थैं पुष्कलभोज्यवस्तुविभिवैंस्साक चमूसहर्तिं
निर्व्यूढा जलराशितुल्यविभवा प्रादापयद्भारतात ।
यो द्रोहोति पुरा त्रिवारमभवत्कारागृहस्याऽतिथि
सोऽय सर्वमहत्तर स्समकरोत्साहाय्यमयत्युत्तमम् ।। ५

लब्ध्वावाऽपि महत्तरामुपकृति जीवातुमत्यद्भुता
भारत्या विहिता न किञ्चिदपिवाऽस्मार्षीत् ब्रिटीषुप्रजा ।
श्रीगङ्गाधरधीरमौलिमपि वा नैवानुमेने त्यक्तत्
लोके स्वार्थहतात्मना मुपकृतिस्सूते प्रतीप फलम् ।। ६

जातीयै मितवादिना मधिगताद्वैरुध्यहेतोस्तदा
भिन्ना भारतसत्सभा हि तिलके कारागृहस्थायिनि ।
तामेना बहुधा सुसघटयितु क्षेमाय मातृक्षिते
चक्रे यत्नमनुत्तम महितधीरश्रीबालगङ्गाधर ।। ७

श्रीमान् गोकुलकोविदो मितसभानाथस्तदानीमभूत्
जातीयोत्तमनायका स्तदनुगैर्भिन्नाशयै विश्लथा ।
सभेदात् भरतावनी बहुमुखी निर्वीर्यभावगते-
त्यन्तर्गाढतया विचिन्त्य कथमप्यैक्याय स व्यापृत ।। ८

सेय भारतभूर्महानदनदीवारान्निधिक्ष्माधरै-
र्नानालोहखनिव्रजै रतिघनैरारामसस्यादिभि ।
विद्याऽशेषकलाविदात्मतनुभूकोटीभिरत्यूर्जिताऽ-
प्यन्तर्दैन्यमुपैति दुर्विधिवशाद्वैदेशिकै वसुभि ।। ९

श्लो ।। तद्दैन्यप्रतिबन्धिन लघुतरोपाय विधित्सुस्सुधी
तन्वन् सचरण निरन्तरतया ग्रामेषु पल्लीषु च ।
चैतन्य वितरन् प्रजासु जलभृद्गभीरवाग्गुम्भनै
एकीभावमकीलयत् भरतभूखण्डे समग्रस्फुरा ।। १०

दित्सूनर्थचयान्विहाय धनिकान् दारिद्र्यदामोदरात्
लोकादेव स ताम्रखण्ड मचिरादेवैकमेवाग्रहीत् ।
तेनार्थेन सुसभृतेन विदधे काचालय श्रीपद
दावेलानगरे स्वदेशिविभवप्रोत्साहनान्दीमुखम् ।। ११

कालीघट्टपुरोत्तमे प्रचलिता जातीयसंसत्तदा
नौरोजि र्जगदेकवन्द्यचरित लेभे तदध्यक्षताम् ।
तद्वक्त्रादुदभूत्स्वराज्यनिनद स्सर्वा दिश स्फोटयन्
तेनेय भरतावनिस्समभवत्प्रोत्तेजितात्मोदया ।। १२

स्वीया राज्यरमा स्ववस्तुविभवो जातीयविद्येति च
त्रीण्यासन्ननुशासनानि सदसि प्रख्यापितान्यन्तत ।
तेनेमा भरतप्रजा स्समभवन् मोदाब्धिमग्नान्तरा
स्वातन्त्र्य भरताबिकातनुभुवामाकाक्षमाणा द्रुतम् ।। १३

आगामिन्यथ वत्सरे घटयितु नागाह्वये पत्तने
लालालज्पतिराडधीश्वरतया जातीयभास्वत्सभाम् ।
कृत्वा निर्णयमन्ततो विघटितास्सभ्या प्रदृष्टान्तरा
शसन्तो बहुधानुशासनविधीन् जग्मुर्यथावद्गृहान् ।। १४

श्लो ।। आङ्गलप्राभवतेजसा स्मृतिवशादुद्वेजितात्मान्तरा
तानित्रीण्यनुशासनानि वितथीकर्तुं पुनस्सङ्गता ।
केचित्सूरतुनाम्नि पत्तनवरे ता भारतीया सभा
'रास् बीहार'सुधियोऽधिपत्यकलया कर्तुं समारेभिरे ।। १५

ज्ञात्वा तन्मितवादिना तु चरित श्रीबालगङ्गाधर
गत्वा स्वीयपरीवृतो न सदसि स्थान स लेभे क्वचित ।
संचिन्त्यात्मनि भारतीयसदस प्राङिनर्णयोज्जीवन
लेखस्तेन च प्रेषितो नहि पद लेभे सभायामहो ! ।। १६

तेनोदीर्णक्रुधा सभा विघटिता मुष्टिप्रहारादिभि
बाहाबाहवि घट्टनै र्लघुतरै र्ग्राम्यप्रलापैर्भृशम् ।
पादूना च बहुप्रयोगविधया छिन्ना च भिन्ना सभा
नानादिक्षु पलायन तु विदधे स्वप्राणरक्षातुरा ।। १७

भग्ने तत्सदसि प्रदीपितरुषा त निन्दितु व्यापृता
सर्वे ते मितवादिनायकवरा श्रीबालगङ्गाधरम् ।
'मोतीलाल्' स्वपरान्तरस्थितिविदा मग्रेसरो दूरदृक्
सङ्गत्येदमुवाच मञ्जुविधिना श्रीबालगङ्गाधरम् ।। १८

जानाम्यग ! भवत्प्रपत्तिमतुलामस्मिन्महाभारते
त्याग धैर्य मनन्यदुर्लभतर धीवैभव वैदुषीम् ।
तेन त्वा मनुसान्त्वयामि बहुधा तेषा विपक्षात्मना
दोषाङ्गीकृतिपत्रदानकलया सर्वैकता स्यादिति ।। १९

श्लो ।। दत्वा तादृशपत्र मार्जवकलाप्रस्निग्धचारित्रभू
सर्वान् तान् मितवादिनोऽतिवदता नाथाश्च सम्मेलयन् ।
भारत्या परदास्यमोचनधृता दीक्षा समुत्तेजयन्
चक्रे सर्वदिगन्तराणि निजसचार प्रपूतान्यसौ ।। २०

श्रीमद्गोकुल लोकमान्यविदुषो रैक्य भवेद्वा नवे
त्यातुर्येण विचिन्तयत्सु बहुधा लोकेषु लोकान्तरम् ।
दुर्दैवात्समवाप भव्यचरितो गोपालकृष्णस्सुधी
वार्ता ता मशृगोत्स बालतिलको वज्राभिघातोपमा ।। २१

लोकक्षेमविधायिभि स्स्वचरितै विद्याविवेकादिभि
सौजन्येन महत्तरेण करुणासधूक्षितैश्चेष्टितै
एको भारतमातृगर्भजनितेष्वाशसनीयोदयो
हा हा । भारतमातर प्रविजहौ सप्रत्यनावृत्तये ।। २२

इत्थ गाढशुचा विदीर्णहृदय तत्तत्सभाप्राङ्गणे
चारित्र समुदाजहार तिलको गोपालकृष्णाश्रितम् ।
श्रुत्वा धैर्यमपोह्य तारमरुदन् वस्त्रै पिधायानन
सभ्यास्तादृगनुत्तमस्य जनन प्रायेण न स्यादिति ।। २३

सभिन्नाशयिनावुभावपि पुरा तद्राजकीयाङ्गणे
निर्याण समपद्यतास्य तिलकस्यात्मापहारोपमम् ।
वैरुध्य न गुणे न चापि चरिते न व्यक्तिभावेऽपि वा
तत्सर्वं महता निजाशयकथा मात्रेण विश्राम्यति ।। २४

श्लो ।। मुबाराष्ट्रसभा विनिद्रितकथा सञ्चिन्त्य गङ्गाधर
पूनाया तु समुज्ज्वलेन विधिना चक्रे तदुत्तेजनम् ।
'होरूलि' त्यपरे 'स्वराज्य'मपरे चक्रुर्महाघोषणाम्
तस्मिन्नेव सभामुखे तदभवद्देशस्य सबोधनम् । २५

सन्धातु मितवादिनायकवरै 'रानीबसन्ता' भिधा
'गान्धि' स्त तिलक समेत्य जगत क्षेमार्थिनौ व्यापृतौ ।
निर्बन्धापगमात्प्रवेशविषये तेषा सभामेलने
श्रोमानैक्यमुदाजहार तिलकस्तत्सर्व मङ्गीकृतम् ।। २६

तत्रासौ भरतस्वराज्यसमिर्ति सस्थाप्य भव्या दृढा
भारत्या निजदास्यमोक्षण.कृते सुव्यापृतो८८सीत्तथा ।
यावद्भारतमेदिनी निजपदस्पर्शात्समुत्तेजयन्
वाग्गुम्भै र्घनगर्जितध्वनिनिभैराशा प्रतिध्वानयन् ।। २७

सपाद्यैक्यमुदञ्चितात्मविभव स्स्वीयान्यपक्षद्वयो
चक्रे सञ्चलन समस्तजगता भिन्दन प्रगाढ तम ।
एव गच्छति कालचक्रविसरे श्रीलोकमान्यप्रभो
षष्टिर्हायनसन्तति प्रचलिता तैस्तै स्स्वदेशोद्यमै ।। २८

इति श्रीलोकमान्यचरिते स्वराज्योद्घोषण नाम तृतीयस्सर्ग ।।

---

गोकुल = Gokhale, ताम्रखण्ड = Copper coin,
कालीघट्ट = Calcutta, नौरोजि = Dadabhai Nowroji,
नागाह्वयपत्तनम् = Nagpur, रासबीहारसुधी = Ras Bihari Ghosh,
मोतीलाल् = Motilal Ghosh, आनिबसन्ता = Annie Beasant.

## अथ चतुर्थः सर्गः ।

श्लो ।। षष्टिपूर्तिमहितोत्सवलक्ष्मी
संभृतस्य सुषमा तिलकस्य
द्रष्टुमुत्सुकमना जनराजि
पुण्यपत्तनमुखी प्रचचाल ।। १

एकमेव सदनं जगती तत्
पुण्यपत्तनवरं सममस्त
सर्वतस्समतया विभक्त्वा
तन्महोत्सव समुज्ज्वललक्ष्मीं ।। २

पुञ्जिताकृति दिशामिव चक्रं
कौतुकेन मिलिता जनताऽऽस्रोत्
अद्भुतैकरसताण्डवरङ्गं
भूषिता समभवन्नगरीसा ।। ३

उत्सवागतजनौघसमुत्था
धूलिपालि रसमा समभावि
हूतये दिविषदां भरतोर्वी
प्रस्थितेव निजपुत्रमहोत्का ।। ४

चन्दनादिमरसौ रभिषिक्ता
धूपिता च परमागरुधूपै
भूषिता च नवपल्लवमाल्यै
पुण्यपूस्सुरपुरीव बभासे ॥ ५

लोकमान्यचरितामृतगाधा
स्वर्णवर्णखचिता ध्वजमाला
उच्छ्रिता गृहशिखासु सुराणा
हूतिपत्रनिवहा इव रेजुः ॥ ६

नाकिना धरणिमस्पृशता तत्
श्रीक्षणेक्षणकुतूहलभाजाम्
आस्तरा विरचिता इव रेजु
कायमानिवहा पुरमध्ये ॥ ७

आत्मकीर्तिमयतोरणजालै
मङ्गलरतितरा प्रविभान्त
लोकमान्य मनुकर्तु मिवय
तोरणं विरुरुचे पुरलक्ष्मी ॥ ८

पूर्णकुम्भयुगली प्रतिगेह
प्राङ्गणेषु निदधे विभिदृष्टम्
पाद्यमर्घ्य मिव दातुममुष्य
श्रीयशोविभवमङ्गललक्ष्म्या ॥ ९

कोमलातिसरसा इव भावा
तस्य सर्वविदुषो धृतदेहा
रेजिरे विरचिता कदलीना
स्तभराजिविभवा प्रतिगेहम् ॥ १०

अभ्रियन्त बहुधा बहुरूपाः
शैलकूटसदृशा स्सुविभक्ता
आतिथेयपरमा, पुरमुख्यै
तत्तदञ्चितपदार्थविशेषा ॥ ११

वैदिकैरपि विधानकलापै
लौकिकैरपि विधानविलासै
सत्वराजसकलासमुदार्ण
तन्महो विरुरुचे रुचिरश्री ॥ १२

सत्रयाग इव सर्वमहीयान्
उत्सव स्समजनि प्रथमान.
राम दृमहितोत्सवलीलाम्
सन्ततान हृदि सर्वजनानाम् ॥ १३

रत्नभूषितविभूषणजालै
भव्यपट्टवसनै रतिमूल्यै
पुष्पमाल्यनिचयै रमुमारात्
सम्पुपूज जनता नतशीर्षा ॥ १४

लोकमान्य बिरुदोऽस्य महीयान्
येन केन विभुना न वितीर्णः
तच्चरित्रविवशीकृतचित्ता-
दप्रबुद्ध मुदगाद् बुधलोकात् ॥ १५

लक्षरूप्य निचयैर्जनताऽस्मै
लोकमान्यगुरवे गुरुपूजाम्
आर्पयत्तमिम मर्थमसौ श्री
मातृभूमिनिधये वितताार ॥ १६

नैतदङ्ग ! जनविस्मयबीज
जानता चरितमद्भुतमस्य
आजनेर्निजसुखेप्सितमारात्
मातृभूहितकृते विजहौ य ॥ १७

सर्वपूततिलकाभिजनाना
तत्तपोविभवसार सुगन्धि
गेयमद्भुतरस रचयन्ती
सञ्जगौ सुमधुर जनराजि ॥ १८

माममान्यदसाविति लोक.
स्वात्मनि प्रमुमुदे समवृत्त्या ।
सुप्रसादकलिकाऽस्य जनेषु
व्यानशे हिमरुचेरिव तुल्यम् ॥ १९

कोमलातिसरसा इव भावा
तस्य सर्वविदुषो धृतदेहा
रेजिरे विरचिता कदलोना
स्तभराजिविभवा प्रतिगेहम् ।। १०

अभ्रियन्त बहुधा बहुरूपाः
शैलकूटसदृशा स्सुविभक्ता
आतिथेयपरमा, पुरमुख्यै
तत्तदञ्चितपदार्थविशेषा ।। ११

वैदिकैरपि विधानकलापै
लौकिकैरपि विधानविलासै
सत्वराजसकलासमुदीर्ण
तन्महो विरुरुचे रुचिरश्री ।। १२

सत्रयाग इव सर्वमहीयान्
उत्सव स्समजनि प्रथमानः
राम ट्टमहितोत्सवलीनाम्
सन्ततान हृदि सर्वजनानाम् ।। १३

रत्नभूषितविभूषणजालै
भव्यपट्टवसनै रतिमूल्यै
पुष्पमाल्यनिचयै रमुमारात्
सपुपूज जनता नतशीर्षा ।। १४

लोकम न्य बिरुदोऽस्य महीयान्
येन केन विभुना न वितीर्णः
तच्चरित्रविवशीकृतचित्ता-
दश्रवुद्ध मुदगाद् बुधलोकात् ।। १५

लक्षरूप्य निचयैं जनताऽस्मै
लोकमान्यगुरवे गुरुपूजाम्
आर्पयत्तमिम मर्थमसौ श्री
मातृ भूमिनिधये वितताार ।। १६

नैतदङ्ग ! जनविस्मयबीज
जानता चरितमद्भुतमस्य
आजनें निजसुखेप्सितमारात्
मातृभूहितकृते विजहौ य ।। १७

सर्वपूततिलकाभिजनाना
तत्तपोविभवसार सुगन्धि
गेयमद्भुतरस रचयन्ती
सञ्जगौ सुमधुर जनराजि ।। १८

माममान्यदसाविति लोक.
स्वात्मनि प्रमुमुदे समवृत्त्या ।
सुप्रसादकलिकाऽस्य जनेषु
व्यानशे हिमरुचेरिव तुल्यम् ।। १९

अश्रुतदृष्टचरा ता
मुत्सवलक्ष्मी विलोक्य जनराजि ।
भव्यामभूतपूर्वां
प्रीतिकलामाप विस्मयस्मेरा ॥ २०

भारद्वाजमुनीश्वरेण विहिता मातिथ्यपूर्णक्रियां
सैन्याना भरतस्य सर्वसहत स्सौभ्रात्रवारानिधे
अप्मार्षीज्जनता प्रमोदविवशा श्रीषष्टिपूर्त्युत्सवे
पौरै पुण्यपुरीनिवाससुभगै स्सन्तार्पिता सर्वथा ॥ २१

या लक्ष्मी रिन्द्रभवनै या लक्ष्मी क्षीरसागरे
तस्या गुणनिका सेय, महश्रीरित्यमन्यत ॥ २२

नाकाधिपत्ये शक्रस्य या या आसन् शुभाशिष
तास्ता स्समुदिता स्सन्तु तिलकस्यैतदुत्सवे । २३

इतीरयन्तो बहुधा, गायन्तस्तत्कथाभरी
प्रजा प्रहृष्टमनस प्रतिजग्मुयथागतम् ॥ २४

इति श्रीलोकमान्यचरिते षष्टिपूर्ति महोत्सव वर्णन
नाम चतुर्थस्सर्ग ॥

---

पुण्यपत्तनम् = poona.

# अथ पञ्चमस्सर्गः

अलोकसामान्यमहोत्सवेक्षण-
प्रभूनमात्सर्यवशीकृतान्तरै ।
मुधाभियोगास्तिलके महात्मनि
ब्रिटीपुवर्यैं मृगयाबभूविरे ॥ १

प्रभुत्वदोषैकविमर्शनोत्सुका
कृता प्रसङ्गा हि सभामुखेष्विति ।
बोप समारोप्य मुधा ब्रिटीषुभिः
'सेक्यूरिटी' दातुमसौ न्यबध्यत ॥ २

तदुत्तरे न्यायपदे महामति
निर्दोषिता मात्मगता निरूपयन् ।
पूर्वोक्तदण्डाभिसराद्विमोचित
पर विरेजे निजतेजसाञ्चित ॥ ३

अथ लक्ष्मणनाम्नि पत्तने
प्रचलज्जातिमहासभाङ्गणम् ।
तिलके विशति प्रशुश्रुवे
ध्वनिरिन्दोरुदयादिवाम्बुधौ ॥ ४

सममेव शिरोभिरानतै
स्तमवन्दन्त समे सभासद ।
निजपक्षविपक्षभेददृ-
क्पथदूरे स महान् व्यराजत । ५

मितवादिभिरेव नैकत
समयोज्यन्त नु मुस्लिमैरपि ।
अतिवादिसभासदस्तदा
तिलकस्य प्रतिबोध वैभवात् ।। ६

हृदि सर्वसमैक्यभावना
भरताम्बा तनुजात सन्तते ।
समवेक्ष्य निजेप्सितोदय
करसस्थ स सुधीरमन्यत ।। ७

दिविषत्तटिनीतरङ्गव-
त्पटुगम्भीरनिजोक्ति गुफनै ।
जगती अखिला स पावयन्
विचचार प्रथमानवैभव ।। ८

सकलानुमतेन वर्त्मना
स गुरुन्यायविधा प्रणालिकाम् ।
विरचय्य तया सुहृदृत
स पुर गन्तु मियेष लण्डनम् ।। ९

उपवर्ण्य तदागमौद्यम
निषिषेधु प्रभवोऽग्लजा भिया ।
भरतावनिपालनोदितान्
सहि दोषान् समुदाहरेदिति ॥ २०

तिलके सति बन्धवेश्मगे
प्रभुविद्रोहितया ट म·तत ।
प्रचचार षिरोलु' राग्लज.
बहुधाग्लावनिपात्रिक।मुखे ॥ ११

असहस्तदसत्यकल्पना
मभियोग विदधे स धीरधी ।
नगरोत्तमलण्डनस्थित-
प्रथितन्यायमहासभामुखे ॥ १२

निजराज्यरमाविनाकृत
प्रभुभिर्गन्तुमथान्वमन्यत ।
नगरीमभियोगहेतुना
कथमप्यात्तभयै स्स लण्डनम् ॥ १३

नगरीमथ गन्तुमुत्सुक
कृतसन्नाहभरोऽब्धिवर्त्मना ।
निजस्त्वबलैकसाधन.
प्रययौ तामथ वीक्ष्य विस्मितः ॥ १४

अतिशय्य पुरी बिडौजस
नगरीय खलु भाति सम्पदा ।
अपरेयमजेन भोगभू
विहिता मध्यमलोकवासिनाम् ॥ १५

मनसाप्यनुमातु मक्षमै
विभवै स्सयमनुत्तमा पुरी ।
सकलाऽत्र कलाऽभिसन्धिता
विधिना न्यायकला विनैककाम् ॥ १६

स जगर्ज निजाभियौगिकान्
विषयान् न्याय्यमुदाहरन् सुधी ।
उपश्रुत्य तदीयवाग्झरी
अभवन्न्यायसभा विचित्रिता ॥ १७

मनसाऽस्य विदोषिता स्वय
प्रतिबुध्यापि च तत्सभाधिपा ।
स्वजनोर्जितपक्षपातिन.
न ददुर्न्याय्य मधर्मबुद्धय ॥ १८

अथ तत्र चिर वसन् सुधी
निखिलान् कार्मिकपक्षनायकान् ।
भरतावनिपक्षपातिनो
विदधे नैज वच कथामृतैः ॥ १९

इतो । निजजातिसभानियोजिता
कतिचित् भारतजात्यपासनाः ।
विनथ बहुधा वितन्वते
द्रविण प्रेपितमत्र लण्डने ॥ २०

अवधार्य स तान् गुरुद्रुह
भरतोर्व्या स्तदिह निवेदयन् ।
धनमाह्य नराकृति निज
प्रजया तूर्णमकारयत्सुधीः ॥ २१

अथ तस्य वचस्सुधाभरै
र्निजमातृक्षितिनादगर्भितैः ।
निशितैरपि सत्रसभृतै
स्सकल लण्डनलमही निरुत्तरा ॥ २२

'माटेगुना' ख्यमन्त्रिग्रणिना समेत्य
वाग्बन्धन प्रमुकृत विघटय्य तत्र ।
दध्मौ स शङ्ख माजतात्मविभूतिरागल
राजन्यमुख्यनगरे नगराजधीर ॥ २३

'नायटु' नाम समिते स्सविधेनु साक्ष्य
तद्भारतीयपरिपालनदोषदर्शि ।
तस्मिन् ददत्यक्किल विकलान्तरङ्गा
स्सभ्या न किञ्चिदपि वक्तुमलबभूवु ॥ २४

श्लो.। 'प्यारिस्सु' नामनगरीसमवेतसन्धि
दीव्यत्सभां समधिगम्य तु हैन्दवानाम् ।
पक्षं निवेदयितु मुत्सुकमेन माहो !
भोता न्यवर्तयदलं प्रभुता निषिध्य ।। २५

काञ्चिद्विलिख्य रुचिरार्थगभीरभावां
सत्पत्रिकां भरतकष्टनिवेदयित्रीम् ।
संप्रेष्य सन्धिसमितिप्रवरान् स चक्रे
सम्मोदविस्मयवशीकृतचित्तवृत्तीन् । २६

मुद्रापितै र्भरतभूपरमार्थवृत्ति-
संवेदनैकपरमैः करपत्रजातैः ।
लण्डन्पुरे बहुमुखं स सुधीः प्रचारं
चक्रे निरुत्तरतया प्रथितात्मशक्तिः ।। २८

तद्भारतावनिभुवां निजराज्यलक्ष्मीः
सर्वात्मना विधिसमर्पितजन्मसत्ता ।
तामन्यहस्तपतितां न चिरं क्षमन्ते
विज्ञायता मविकल तरसाङ्लजात्या ।। २८

युद्धं सुसाध्यमकरो द्भरतप्रजालिः
तेन ब्रिटीषुजनता जयमाप संख्ये ।
सेयं स्वराज्यविभवार्पणतर्पणीया
लोके कृतेप्रतिकृतं विहितोहि धर्मः ।। २९

श्लो । केन्द्रीकृतात्मविविधाञ्चितशक्तियोगात्
अस्मन्मही नहि परेण चिरं नु भोज्या ।
इत्थ निवेद्य हृदयगम वाग्विलासै
लण्डनपुरान्निववृते निजमातृभूमिम् ॥ ३०

लकाया रामचरितमेकको हनुमानिव
तिलको भारतख्याति श्रावयामास लण्डने ॥ ३१

युक्तिप्रत्युक्तिचातुर्यं ज्ञानविज्ञानवैभवम्
सर्वतोमुखवैदुष्य तस्य विज्ञाय धोरताम् ॥ ३२

विस्मिता स्सस्मिता स्तम्थु पश्चाद्विषयवासिन
पाशव बलमादाय भेदोपायाश्च गर्हितान् ॥ ३३

निर्जिता भारती भूमिरित्यमन्यत सा प्रजा
ज्ञानविज्ञानसपत्तौ मेरुर्सर्षपयोरिव ॥ ३४

तेषामस्माकमेवास्ति महदेवान्तर स्फुटम्
प्रत्यूचिरे न केऽप्यस्य तिलकस्य महात्मनः ॥ ३५

वादोपवादसन्दर्भे समेत्याङलविशारदा.
अस्मन्न्यायसभामध्ये महाप्रासनससदि ॥ ३६

गर्जित तेन सिहेन प्रतिपक्षभयकरम
सर्वभोजायित तेन लण्डन्नगरसत्तमे ॥ ३७

न तत्समो वाभ्यधिक कलयाऽप्यत्र दृश्यते
इति श्रोत्रसुखा वाणी शृण्वन् देशहितकर ॥ ३८

श्लो। प्रमाणाय मतिं चक्रे मातृ भूदर्शनोत्सुकः
तमागतं समुद्वीक्ष्य लोकमान्य मविक्षतम् ।। ३९

प्रत्युज्जगाम तरसा सकला भारतप्रजा
तद्दर्शनसमुत्साहजातहर्षमहोर्मयः ।। ४०

समेषां भारतीयानां न ममु हृदयान्तरे
स्वागतेनाभिनन्द्यैनं स्वात्मवत्प्रेमभाजनम् ।। ४१

आत्मराज्यश्रियं दीप्तामन्तिकस्थामभावयन्
यदीयं भारती भूमिर्विवशा नाभविष्यत् ।। ४२

लब्ध्वा तिलकस्तस्या महामान्यकरोऽपिवा
सेनानीर्वा सर्वमहान् सर्वतन्त्रप्रवर्तकः ।। ४३

महाचार्यवरो वाऽपि सोऽभविष्यदसंशयम्
सर्वतोमुखवैदुष्य महासाम्राज्य सम्पदः ।। ४४

मान्तो नवाभित पर्यन्त स्तस्य कारणजन्मनः
कामन्दकेन वृद्धेन शङ्कराचार्यमौलिना ।। ४५

विद्यारण्येन मुनिना श्रीशिवाजी महीभुजा
यद्यत्सुविहितं कृत्यं भारताभ्युदयार्थिभिः ।। ४६

तत्तत्सुकृतमेकेन तिलकेनेति भण्यताम्
इतीरयन्तो हि जना स्स्ववेश्मानि प्रपेदिरे ।। ४७

इति श्रीलोकमान्यचरिते, लण्डनयात्रा, प्रत्यागमनं
चेति पञ्चम स्सर्गः ।।

---

लक्ष्मणपत्तनम् = Lucknow    षिरोलु = Volanline shirol
मक्षगु = Montagn    जन्मसत्ता = Birth right.

# अथ षष्ठः सर्गः ।

आर्या ।। व्यलिखद्वैदिकनिलयं' काराबद्धः कदाचिदेवासौ
ज्योत्स्नायिताऽस्य कीर्तिस्तेन ग्रन्थेन स्वपरखण्डेषु ।। १

तत्र न्यरूपयद्गाढं प्रामाण्येन च युक्तिभिः
वेदप्रसूतिभवनं नेयं भारतभूरभूत् ।। २

उत्तरध्रुवपर्यन्तभूमिरित्येव निश्चितम्
उद्वेजिताः प्रजास्तत्र नीहारप्रलयादिभिः ।। ३

विच्छिन्नसर्वसौभाग्यामुत्तरध्रुवभूस्थितिम्
त्यक्त्वा भूमध्यरेखाया दक्षिणां भुवमास्थिताः ।। ४

अक्षे चलति यत्किञ्चित् गोलाकारा च भूश्चलेत्
अक्षस्य ऋजुरेखाया मुपरि ध्रुवमण्डलम् ।। ५

अक्षस्य चलनं किञ्चिद्वलयाकृति दृश्यते
षड्विंशतिसहस्राब्दकालो ह्येकभ्रमेर्भवेत् ।। ६

चलनस्यातिसूक्ष्मत्वाद् ध्रुवं स्थिरमिवेक्ष्यते
ध्रुवेण भ्रमतान्वक्षं चला रेखा खमध्यगा ।। ७

मेषादिराशिचक्रस्य चलनं नैव विद्यते
खगोलमध्यरेखाया राशिचक्रस्य संयुतिः ।। ८

श्लो। विषुव स्थान मित्युक्त ज्योतिश्शास्त्रविशारदै
समरात्र दिव काल विषुवद्विषुव स्मृतम् ।। ९

विषुवच्चलतीषच्च सूर्ये तत्र समागते
तद्वत्सरादिश्चलति ऋतुमासायनादिच ।। १०

यज्ञयागादिकर्माणि व्यत्यस्यन्ति ततोऽन्यथा
मृगशीर्षेति नक्षत्रे विषुवत्पूर्वमावसत् ।। ११

रोहिणी कृत्तिका क्रान्त्वा वसत्यद्याश्विनीमुखे
रैवती मचिरादेव विषुवत्सङ्क्रमिष्यति ।। १२

मीनराशगते सूर्ये वसन्त परिदृश्यते
पञ्च मासा ग्रह काल रात्रिकालोऽपि तादृश ।। १३

मासो मास उष काल इति वेदेषु गीयते
उत्तरध्रुवभूभागे दृश्यैवकालिको स्थिति । १४

मृगशीषस्य चाश्विन्या अशीत्यक्षा भवन्त्युत
षट्सहस्राब्दकालस्स्यादशीत्यक्षाश सम्मित ।। १५

तत्पूर्वमेव वेदाना स्थितिरित्यनुमीयताम्
त्रिशत्स्वसार इत्यादि ऋग्वेदीयसरस्वती ।। १६

त्रिंशतोह्युषसामन्ते सूर्यस्योदयनादिकन्
दिवसाना च रात्रीणा दैर्घतावर्णनादिकम् ।। १७

वृत्रासुरादिगाथाना वर्णनेषु विशिष्टता
तत्तत्प्रकृतिसौन्दर्यवर्णन परमाद्भुतम् ।। १८

श्लो।' उत्तरध्रुववासित्व वेदाना पूर्वभाविताम्
श्रुती प्रमाणयस्तास्ता बालगङ्गाधरस्सुधी ॥ १९

युक्ती. प्रदर्शयन् भव्या न्निश्चिकाय निरुत्तरम्
निश्चीयते तदेवाद्ध भूगर्भपरिशोधनै ॥ २०

उपमृत्य त्रयी साङ्गा खगोल परिशोध्य च
एव सुविवृत तेन सूक्ष्मशास्त्रार्थदर्शिना ॥ २१

प्राच्याना सूक्ष्मविज्ञानलक्ष्मी गणितगोचराम्
विज्ञाय विस्मय जग्मु पाश्चात्या यन्त्रदर्शिन ॥ २२

इत्य वेदेषु साङ्गेषु खगोलादिविशोधनै
वैदुषी लोकमान्येन दर्शिता वैदिकालये ॥ २३

माण्डले' नामविख्याते कारागारमहाश्रमे
षडब्दानि महाधीरस्तपस्तेपे सुदारुणम् ॥ २४

गीतारहस्य मित्येतत्तस्य तपस फलम्
सुधाकलश एवैष गीताक्षीराब्धिसभव ॥ २५

माकि द्विशत सख्याना प्राच्यपाश्चात्यजन्मनाम्
वेदान्ताना परामर्शं यदत्रामानुषी स्फुरा ॥ २६

गीतानाम महाशास्त्र साक्षाद्भगवतेरितम्
सागरादपि गम्भीर विशाल गगनादपि ॥ १७

अमूल्यभावरत्नाढ्य शान्त्या दान्त्या तरङ्गितम्
सर्वखण्डेषु सर्वत्र स्वनुवादास्सहस्रश ॥ २८

श्लो।। असख्य।कानि भाष्याणि व्याख्यानादीनि लक्षश
दृश्यन्ते नैव गीताया विवृत हृदय क्वचित् ।। २९

भगवच्छङ्कराचार्य जगदद्भुतशिल्पिना
गीतानाम महासौधद्वार मुद्घाटित पुरा ।। ३०

तेन प्रविश्य तिलक विदुपा तिलकायितः
सरहस्यपदार्थाना विधायाद्भुतसङ्ग्रहम् ।। ३१

जगद्विपणिवीथीपु प्रावेशयदुदारधी
क्रय्यमेतदमूल्यार्थजात सर्वसुहृद्वरै ।। ३२

श्रौतस्मार्तादिकर्माणि निष्काममनुतिष्ठताम्
नश्यन्ति पुण्यपापानि सञ्चितान्यखिलान्यपि ।। ३३

उत्पत्स्यते मनान बोध विनष्टे कर्मसञ्चये
ततोऽविद्याविनाशस्स्याज्जीवन्मुक्तिर्निरन्तरा ।। ३४

कर्मरूपा प्रवृत्तिश्च निवृत्तिर्न्यासरूपिणी
मुमुक्षोर्द्वाविमौ मार्गौ गीताशास्त्रे प्रदर्शितौ ।। ३५

निष्कामकर्म वा कुर्वन् जीवन्मुक्तस्सदाचरेत्
सन्न्यासमथवा कुर्वन् भिक्षामात्रेण जीवतु ।। ३६

एतावान् विपयस्तुल्यश्शङ्करस्य जगद्गुरो
लोकमान्यस्य चाप्यासीद्विभेदस्तु प्रदर्श्यते ।। ३७

प्रवृत्तिर्वा निवृत्तिर्वा श्रीकृष्णपरमात्मना
अर्जुनायोपदिष्टेति विषये भेददर्शिनौ ।। ३८

श्लो। निर्वृतिरुपदिष्टेति सिद्धान्तयति शङ्कर
प्रवृत्तिमार्ग एवाल गीताग पिण्डिताशय ॥ ३९

इतिब्रूते लोकमान्य. प्रमाणैर्युक्तिभि स्फुटम्
"तयोस्तु कर्म सन्यासात्कर्मयोगो विशिष्यते" ॥ ४०

'तस्मादसक्तसततं कार्यं कर्म समाचर"
"कर्मण्येवाधिकारस्ते मा फलेषु कदाचन" ॥ ४१

"विहित कुरु कर्म त्व कर्म ज्यायोह्यकर्मण"
"लोकसंग्रहमेवापि सपश्यन् कर्तुमर्हसि" ॥ ४२

'कर्मणैव हि ससिद्धि म स्थिता जनकादय"
इत्यादिर्गीतावाक्यानि प्रमाणीकृत्य निर्भरम् ॥ ४३

गीतासूदाहृता प्राञ्च प्रवृत्तिपथगामिन
विवस्वान् मनुरिक्ष्वाकुर्जनकश्च महीपति ॥ ४४

तेषा निष्कामकर्मत्व निरूप्य च यथायथम्
उपदिश्य यथाप्रश्न भिक्षावृत्तेर्निवर्त्य च ॥ ४५

युद्धे प्रवर्तयामास कौन्तेय भगवान् हरि
न कृतेनाकृतेनार्थो वर्तएव च कर्मणि ॥ ४६

इति प्रवृत्तिपरता लोककल्याणहेतवे
उदाजहार भगवानात्मनोऽपि सविस्तरम् ॥ ४७

निवृत्तिपरता नाम स्वार्थएवान्ततो भवेत्
निवृत्तिमुपदिश्यापि शङ्कराचार्यसद्गुरु ॥ ४८

श्लो।। प्रवृत्तिपर एवासीद्यावज्जीवमकामन
यदि तादृङमहात्मान निष्कर्मपरमा यदि । ४९

इद मन्धतम कृत्स्न जायेत भुवन ध्रुवम्
इति गीतारहस्यार्थ युक्तिप्रामाण्यपुष्कलम् ।। ५०

व्याचख्यौ लोकमान्यश्रीबालगङ्गाधरस्सुधी
आजीवितान्तमभवत्कर्मयोगप्रवर्तक ।। ५१

योगक्षेमविधायीनि कर्माणि जगतोऽनिशम्
कुर्वन्निनाय समय सर्वथा निस्पृहान्तर ः। ५२

ईदृश लोकमान्यस्य वैदुष्यमपराजितम्
ईश्वराशसमुद्भूतिमावेदयति सवत ।। ५३

मृणालसूत्र शतधा विभिद्य
तदन्तर द्रष्टुमपि प्रवीणै ।
अलोकसामान्यधिया विलासै
रसौ मनीषी प्रथते जगत्याम् ।। ५४

इति श्रीलोकमान्यचरिते वैदिकनिलय निरूपण
गीतारहस्योन्मीलन चेति षष्ठस्सर्ग ।।

---

# अथ सप्तमस्सर्गः ।

श्लो।। श्रीशिवाजिमहावीरव्रतसमहितोत्सवान्
कारयन सर्वतो भूम्ना पुरोभागिभिरीरितान् ।। १

खण्डयन् बहुधालापान् सञ्चचार महाशय
पूनाख्यकलकत्तादिनगरेष्विदमूचिवान् ।। २

उत्सवा स्समनुष्टेया उत्साहपरिपूर्तये
अत्र जातिमतादीना विवक्षा नोपपद्यते ।। ३

दैवान्महाराष्ट्रदेशे राजपुत्रमहाकुले
जातोऽपि श्रीशिवाजीशस्सम्मान्यस्सर्वभारतैः ।। ४

माहम्मदाना क्रूरत्व न सेहे परिपालने
न क्वापि जातिविद्वेष प्रादर्शयदुदारधी ।। ५

माहम्मदीययुवतिमानीता दण्डनायकै
सम्मान्य प्रषयद्भर्तुरन्तिक तामनिन्दित ।। ६

देशकालानुरोधेन यत्कार्य तेन तत्कृतम्
धैर्य त्यागो मातृदेशभक्तिर्मानोऽभिमानिता ।। ७

कल्याणगुणसम्पत्ति स्तस्मिन्नित्यानपायिनी
द्वेषो वा यदि वाऽसूया नास्ति कस्मिन्मतेऽपि न ।। ८

श्लो॥ सौहार्द मुस्लिमैरन्यैश्चैकसूत्रनियन्त्रितै
सर्वथा कर्तुमेवोत्का भारतीय स्समन्तत ॥ ९

सर्वान् प्रेम्णाऽनुपश्याम विद्विष्यामो न कञ्चन
असूयया‌ऽभिभाषन्ता शिवाजि प्रति विद्विष ॥ १०

न, तेन तच्चरित्रस्य कलक प्रतिसज्जति
मार्ले' प्रभुमणेर्वागी सावधानै र्निशम्यताम ॥ ११

आडग्लेयाननुमोदन्ते भारता स्सर्वपार्थिवा
वणिजो धनिनस्सर्वे निर्धनान् कतिचिद्विना ॥ १२

इति मार्लेप्रभोरुक्ति परिहासाय कल्पत
दण्डभीतिस्वार्थलौल्यमूढताभिर्यथायथम् ॥ १३

आग्लेयपालनामोद दर्शयन्ति यहि क्वचित्
परमार्थदृशा कश्चिदाग्लेये नानुरज्जति ॥ १४

धनहीनत्व मस्मासु सोत्प्रासमनुभाषति
यदि स्मरत्यात्मवृत्त भूतपूर्वमकिञ्चनम् । १५

नैवविध प्रभाषेत परिहासकथास्पदम्
तत्तदुद्योगवशतासगृहीतार्थसञ्चय ॥ १६

स मार्लेप्रभुरद्यत्वे धनिकेषु विगण्यते
अधिकारबलोन्मत्ता प्रलपन्तु यथायथम ॥ १७

निन्दया वा यदि स्तुत्या नकिञ्चित्फलमस्ति न
अस्मिन्नपि सभारङ्गे नियुक्ता गूढचारिण ॥ १८

श्लो।। सन्ति सन्तु न नो भीतिस्सर्वसत्याभिभाषिणाम्
पुरो वा यदिवा पश्चादविपर्यासितोक्तिभि ।। १९

वक्तव्यमुच्यते सर्वमसन्दिग्धमकल्पितम्
प्रधानप्रभवस्सन्तु यदि वा चक्रवर्तिन ।। २०

यदि वा भगवान् साक्षान्न भीर्भूतार्थवादिनाम्
चारसम्प्रेषणार्थाय वृथाकारी महान् व्यय ।। २१

न ते जानन्ति हृदय भारताना महत्तरम्
ज्ञात्वाऽपि हृदि निर्दोष लालाल्जपतीश्वरम् ।। २२

द्वीपान्तरावासकृते निर्युर्भीपयितु हि न
लालालजपतीशेन व्यूढा कार्यप्रणालिका ।। २३

निर्वर्त्यता निरुच्छ्वासमस्माभिरविशकितम्
स्वराज्यभाग्यलक्ष्मीर्न प्राणेभ्योऽपि गरीयसी ।। २४

कारागारप्रवासादिदण्डोवा प्राणविप्लव
भवत्वीश्वरसकल्पान्नास्था नः पाञ्चभौतिके ।। २५

यशश्शरीरमाचन्द्रतार जीयादकश्मलम्
वयमेवानुभोक्ष्याम स्वराज्यफलमूर्जितम् ।। २६

अथवा नस्सन्ततिर्वा फलभाग्वद्धिमेष्यति
षट्त्रिंशत्कोटिसख्याकै भारतीयसहोदरै ।। २७

उदुह्यते दास्यभाव स्वमातृपदसन्निधौ
वज्रलेप कलकोऽय प्राणैर्वा परिह्रीयताम् ।। २८

श्लो॥ भारतापशदै कैश्चित् श्ववृत्त्या गर्भपोषकैः
आवर्त्यतेऽङ्गलराजन्यपालनाचक्रमन्ततः ॥ २९

एवं शिवाजिवीराधिवीरसन्महितोत्सवे
उन्मीलयन् प्राच्यवीर्यं जगाद वदतां वरः ॥ ३०

महाराष्ट्रं जनपदं पावितो यस्य जन्मना
समर्थरामदासोऽभूत् प्रह्लादसदृशो महान् ॥ ३१

पुण्याख्यनगरे भव्ये तस्य सत्स्मृतिवासरे
प्रावर्तत सभा काचित् सर्वसम्मोदभाजनम् ॥ ३२

तामुपेत्य सभां धीरस्तिलकस्समभाषत
मतस्य राजकीयस्य दुर्विभेद्या हि सङ्गतिः ॥ ३३

श्रीशिवाजिमहीनेतृ रामदासमहायते
अविनाभावसंबन्धो मते वा राजकीयके ॥ ३४

एकस्य स्मरणादन्यः स्मृतिमार्गेऽवतिष्टते
उपदेशादृते भूम्ना महता नयवेदिनाम् ॥ ३५

भूभुजां पालनाचक्रं परिभ्रमति न क्वचित्
प्राज्ञो भूपतयस्सर्वे मुनीनां वशवर्तिनः ॥ ३६

पालयन्तस्स्वराज्यानि लेभिरे शाश्वतं यशः
श्रीशिवाजिमहाराजो रामदासाज्ञयाऽनिशम् ॥ ३७

प्रावर्तयद्राज्यतन्त्रं तेनासौ विजयी बभौ
रामदासकृतो ग्रन्थः 'दासबोध' इति श्रुतः ॥ ३८

श्लो॥ वेदान्तबोध पूर्वार्धे द्वितीये राजकीयकम्
पापभीतिर्दैवचिन्ता धैर्यादिगुणविस्तर. ॥ ३९

ज्ञानिना मुखदेशेन जायन्ते पालकावले
उपदेशाद्भगवतो फल्गुनस्य यथा पुरा ॥ ४०

युद्धे प्रवृत्तिरुदिता यथा धर्माभिरक्षित
स्वात्मनिष्ठा पर केचिन्मौनिनस्सन्तु कुत्रचित् ॥ ४१

आनन्दरस मास्वाद्य ते तरन्तु भवाम्बुधिम्
ता स्वार्थपरता काञ्चित् कथयामो विमर्शनात् ॥ ४२

अपरे तु महात्मान लोकसग्रहतत्परा
उपदेक्ष्यन्ति ते ज्ञान शिष्यायोत्तमशीलिने ॥ ४३

उपदेशस्स एवाल पारपर्योपबृहित
अर्वाचीनस्य लोकस्य योगक्षेमाय कल्पते ॥ ४४

नोपदेक्ष्यन्त्यनर्हाय यथा स भगवन् हरि
पार्थायोपादिशद्गीता नान्यस्मै वाप्यबोधयत् ॥ ४५

प्राज्ञोऽपि 'नानाफर्नावीस' धैर्यसाहसवर्जित
विशिष्ट नाकरोत्किञ्चित् वृथाऽऽसीत्तस्य विज्ञता ॥ ४६

शिवाजिस्सुमहच्चक्रे रामदासप्रबोधनात्
सर्वत्र शान्तिनियम न क्षेमाय प्रकल्पते ॥ ४७

कृतप्रतिकृत कार्यं दुर्वृत्तानामशङ्कितम्
इतीम रामदासीय मुपदेश मनुस्मरन् ॥ ४८

श्लो॥ धैर्य साहस मालब्य कार्पण्यादिविवर्जित
कर्तव्यबुद्ध्या कर्माणि कृत्वा जयमवाप स ॥ ४९

यथा नृसिंहो भगवान् प्रह्लादे शान्तिमावहन्
कालाग्निरुद्र इवासीत् हिरण्यकशिपौ पुन ॥ ५०

हत्वा स रावण रामो विभीषणमथाब्रवीत्
यथा ते रावणो भ्राता ममाय तादृशो मत ॥ ५१

अमात्य लोककृते न क्रोधेन न चेर्ष्यया
भाषणीय क्वचित्क्रूर वर्तितव्य तथा क्वचित् ॥ ५२

विना हृदयदोषेण लोककल्याणकाङ्क्षया
तादृशी द्विविधा वृत्ति आलब्य श्रीशिवाजिराट् ॥ ५३

लोकक्षेमविधानाय चक्रे साहसमद्भुतम्
रामदासो महाभक्त जीवन्मुक्तो बभूवहा ॥ ५४

उक्तवैरीदृशैस्तस्य न किञ्चत्फलमिष्यते
तदीयैरुपदेशैर्नो यथावत्समनुष्ठितै ॥ ५५

लोकद्वयशुभाधायि फलमात्यन्तिक भवेत्
एवमाभाष्य निर्धार्य, स सुधीरत्यजत्सभाम् ॥ ५६

इति श्रीलोकमान्यचरिते श्रीशिवाजिमहाराज, समर्थ-
रामदासस्मरण नाम सप्तमस्सर्ग ॥

---

माहम्मदा: = Mahammadans, मतम् = Religion,
राजकीयम् = Politics, कृतप्रतिकृतम् = Tit for tat.

## अथ अष्टम स्सर्गः ।

श्लो।। यस्मिन् गर्जति दूरातिदूरदेशनिवासिनि
शूरा धीराश्च बलिनोऽप्याग्लनाथाश्चकम्पिरे ।। १

नीतिशौण्डीरतामस्य सगृह्य प्रब्रुवामहे
विस्तृत्य वक्तु केनाम जगत्या मीशते बुधा ।। २

स कदाचित्समाहूत्य भारतानिदमूक्तवान्
आग्लेयचक्रवर्ती वः निर्गुणब्रह्मणा सम ।। ३

दोषेण वा गुणेनापि सहि किञ्चिन्नलिप्यते
महती शासनसभा सगुणब्रह्मसम्मिता ।। ४

प्रवर्तयति साम्राज्ये सर्वतन्त्राणि सा स्वयम्
'केनडा' दीनि सामन्तराज्यानि बहुलानि हि ।। ५

तस्या निदेशे वर्तन्ते हिन्दूदेशोऽपि तादृश
आदाये वा व्यये वाऽपि नियोज्याना नियोजने ।। ६

सर्वशासननिर्माणेतेषामस्ति स्वतन्त्रता
अस्माक भारतीयाना चलितु वा पदात्पदम् ।। ७

नास्ति स्वातन्त्र्यलेशोऽपि दासदासा यते वयम्
केनडादिमसामन्तपौरजानपदैस्समम् ।। ८

श्लो।। प्रतिपत्ति समस्फारा कामयेमहि नाधिकम्
एतदेव स्वराज्य न काक्ष्यते न ततोऽधिकम् ।। ९

द्रोहो वा यदिवा द्वेष दोषो वा नात्र मृग्यते
तमेवाग्लेयराजेन्द्र बहुमन्यामहे स्वकम् ।। १०

स्वात्मापहारतुल्याना स्वातन्त्र्यमुपरुन्धताम्
नानुमन्यामहे घोरशासनाना प्रचालनम् ।। ११

राज्याङ्गशास्त्रजातीयसौधनिर्माणयोर्द्वयो
स्वातन्त्र्यमेव जीवात्मा सर्वप्रियतमस्स्मृत ।। १२

आसुरी गुणसम्पति दास्यसपादनोर्जिताम्
बिहाय, दैवी स्वातन्त्र्यश्रिय मर्जयति प्रधीः ।। १३

स्वातन्त्र्यशक्तिग्रसने न काऽपि प्रभुता क्षमा
तामेव शक्ति प्रच्छन्नामात्मानमिव निजरम् ।। १४

प्रबोधयितुमेवासा वारभो मम पुष्कल.
अन्यजाति स्वजातीयदासी कर्तु निरन्तरम् ।। १५

नास्ति शक्तिरिति प्रोक्त श्री 'जान्स्टूअर्टमिल्लुना'
मतविद्या राजनीति भिद्येते न मिथ क्वचित् ।। १६

परेषा पालने नास्मद्धीर्मेधे नश्यतो भृशम्
अतो भेद प्रपश्यामः मतनीत्योर्न चास्ति स ।। १७

पुत्रतुल्या राष्ट्रसभा पितृतुल्या महासभा
पितुराज्ञेव पुत्रेण राष्ट्रै पूज्या महासभा ।। १८

श्लो।। स्वराज्यनाममन्त्रस्य जपकोटिभिरन्वहम्
तीरितैर्युक्तिवादै र्वा नैव किञ्चित्प्रयोजनम् ।। १९

आत्मजीवितसर्वस्व पण कृत्वा समर्जनै
प्रयत्नेन स्वराज्यश्री प्राप्तव्येति सुनिश्चितम् ।। २०

अद्य वा फलनिष्पत्तिस्स्यात्तत सन्तानकेऽपिवा
भविष्यति न सन्देह सर्वथा प्रयतामहे ।। २१

कुलजातिमतै भिन्ना भारतीयास्स्वभावत॰
स्वपालनक्रियादक्षा न भवन्ति कदाचन ।। २२

इति स्वार्थपरा केचिद् घुष्यन्ति कुटिलाशया
अशोकचन्द्रगुप्ताद्यै स्सशासनमसकटम् ।। २३

पालिता भारती सेय वय तद्वशसभवाः
कथ न प्रभविष्यामः कर्तुं नाम स्वपालनम् ।। २४

तेषामुदारयशसा सत्वश्रोस्सर्वतोमुखी
अस्माकं रक्तनालेषु स्रवत्यद्यापि पुष्कलम् ।। २५

पाशव बलमादाय निर्वीर्या निष्प्रभा कृता
भेदोपायैर्महाज्ञानजन्मभूर्भारती मही ।। २६

तस्मात्तेषामहकारो जृभते सर्वतोमुख॰
ननावाणिज्यनिक्षिप्तस्वीयमूलधनक्षति ।। २७

स्वतन्त्रताप्रदानेन भवेदिति भियाऽऽकुला
नेैङ्गन्ते स्वेच्छया दातु स्वातन्त्र्य भारतावनै ।। २८

श्लो। भारताना धर्मसूक्ष्मपरिपालननिष्ठताम्
न जानन्ति बहो कालादस्माभिस्सङ्गता अपि ॥ २९

चिन्ने भिन्ने भारतेऽस्मिन् शान्तिस्सस्थापिताच तै
तन्त्रीवार्ताधूमयानप्रमुखाना च विस्तरै ॥ ३०

बहूपकृतमस्माक विस्मरामे न कर्हिचित्
आन्तरङ्गिकराज्याङ्गव्यवहारनिरीक्षणे ॥ ३१

स्वातन्त्र्यप्राप्तिमात्रेण तृप्तिमेष्यति भारती
औचिती वा कृतज्ञत्व सौहृद वाऽप्युदारताम् ॥ ३२

स्वप्नेऽपि न जहात्येषा भारती धर्मलालसा
कृतप्रतिकृते व्यग्रा न काञ्चिन्नष्टिमीहते ॥ ३३

स्वप्राणग्रन्थिसदृशी जातीयाभिनिविष्टता
समूलकाष मुत्रवाते त्यन्तस्ताम्यति सर्वथा ॥ ३४

तामेव पुनरुद्धर्तु प्रार्थनेव मुहुर्मुहु
'होम्रूल्' नाम स्वगेहस्य कृत्यनिर्वहण मतम् ॥ ३५

स्वगृह भारती भूमि स्सर्वेषामेव न. परम्
परेषामत्र निर्वाह न सहेमहि किञ्चन ॥ ३६

'रौलट्' मुरवाना कूराणा शासनानामतिक्रम
न्याय्येन शान्तियुक्तेन पथा कर्तव्य एव न ॥ ३७

सत्याग्रहोऽयमुद्दिष्टो गान्धिना धर्मवेदिना
नात्र दोष प्रपश्याम विमृश्यापि मुहुर्मुहु ॥ ३८

श्लो।। स्वत्वान्याजन्मसिद्धानि निर्मूल्य स्ववशीकृति
परिश्रमाणा गृह्याणा यन्त्रैर्निर्मूलनक्रिया ।। ३९

उन्नतोद्योगनिर्वाहे भारतावनिजन्मनाम्
अशक्तिकल्पना भूय स्वात्मोत्कर्षप्रकाशनम् ।। ४०

आग्लेयोद्योगिविषये सैन्याना पोषणादिके
अमितार्थव्ययो घोर स्वेच्छया प्रतिवत्सरम् ।। ४१

वाक्स्वातन्त्र्यनिरोधार्था स्वेच्छया शासनक्रिया
एवमादिभिरस्माक क्रियते मर्मकृन्तनम् ।। ४२

तन्मर्मव्रणसघातचिकित्सार्थ समीहिता
'स्वराज्यसमिति' नाम सस्था काचिदनुत्तमा ।। ४३

तत्स्वरूपमिद ज्ञेय सर्वैर्भारतजन्मभि
आग्लेयास्स्वदेशेषु यथा स्वच्छन्दचारिण ।। ४४

तथैव भारते देशे वय स्वच्छन्दचारिण
कार्यनिर्वाहिवर्गाणा मधिकारो निरङ्कुश· ।। ४५

शासनादिकनिर्माणे प्रवेशस्तेन निष्फल
'माण्टेगु' मन्त्रिणाऽस्माक धृतकोशातिकीसमम् ।। ४६

स्वपालन नु विहित नानुमन्यामहे वयम्
दृश्यन्ते बहवो दोषा स्तत्र सम्यग्विमर्शनात् ।। ४७

एकैकराष्ट्रात्सग्राह्या व्यक्तयो दश पञ्च च
ताभिर्मिलित्वा जातीयसभा सम्यक्प्रवर्तताम् ।। ४८

श्लो।। इति केल्कारुना' सधि स्सूचितो 'रोचते हि न
इत्थ गम्भीरया वाचा समुपन्यस्य धीरधी ।। ४९

त्यक्तामपि स्ववर्गेण सम पूर्वं महासभाम्
प्रविवेश पुनर्धीमान् देशक्षेमविधानकृत् ।। ५०

यस्योपदेशवचनै र्भरतावनीय
प्रक्षालितेव बहिरन्तरलङ्कृतेव
उन्मीलितेव बहुधा परिशोधितेव
पुष्णात्यनन्यसुलभा सुषमाममेयाम् ।। ५१

इति श्रीलोकमान्यचरिते भारत स्वातन्त्र्यसमर्थन
नाम अष्टमस्सर्गः ।।

---

महती शासनसभा = Parliament,
जान्स्टूअर्टुमिल्लु = John stuart mill,
तन्त्रीवार्ता = Telegraph,
धूमयान = Railway,
गृह्या परिश्रमा = Cottage industries,
केल्कारु = N. C kelkar.

## अथ नवमस्सर्गः ।

श्लो।। अध्यक्षपदमारूढे 'नवरोजि' महाशये
द्वाविंशतितमा तत्र सङ्गता देश्यसत्सभा ।। १

अधिकृत्य स्वदेशीय पुनरेवमभाषत
आग्लहैन्दवसोदर्यंज्यौतिष व्यर्थतामगात् ।। २

हिन्दूमहम्मदीयाना मुद्यमेऽस्मिन् विभिन्नता
भविष्यतीति सहृष्टास्स्वार्थोपहतचेतस ।। ३

अस्यामद्य सभावेद्या विपर्यस्त तदीप्सितम्
उद्यमेऽस्मिन् भारतीयास्सङ्गता ननु मुस्लिमा ।। ४

बद्धादरास्साधयितु स्वदेशीयमहोद्यमम्
धनिका मध्यकक्षीया विभिद्यन्ते नु केचन ।। ५

न तावताऽस्य हानिस्स्यादुद्यमस्याधिकादृते.
मृषेति ज्यौतिष तेषा भणामि भवता पुर ।। ६

स्वदेशवस्तुप्रोत्साहदीक्षाया दीक्षिता वयम्
यदि स्याम क्षणादेव स्वराज्य हस्तग भवेत् ।। ७

कलकत्तापुरे श्रीमान् पुनरेवमभाषत
मितवाद्यतिवादीति भेदोऽय न व्यवस्थित ।। ८

श्लो।। विपर्यस्य प्रवर्तने तावुभौ कार्यचोदितौ
यस्मिन् कस्मिन् जनपदे परदेशीयपालनम् ।। ९

न चिर स्थास्यतीत्येष विषयस्सर्वगोचर
नौरोजिस्तु महाभाग पञ्चविंशतिवत्सरान् ।। १०

उषित्वा लण्डनपुरे प्रार्थयित्वा मुहुर्मुहु
आगत्य स्वानुभूतिं नो निवेदयति विस्फुटम् ।। ११

धनिका श्रामिका वाऽपि यदिवाऽन्येपि पालका
भवन्तु तत्र नास्माक किञ्चिदस्ति प्रयोजनम् ।। १२

स्वतन्त्रताप्रदान न, न कस्मैचन रोचते
मृदुताक्ष्णोक्तिभेदेन वर्तन्ते नयपारगा ।। १३

इति दादाभाविवचश्शृण्वन्नपि महामतिः
गोकुल प्रार्थनायैव पुनरुज्जृभते बत ।। १४

'पार्लमेण्ट' सभा सर्वा नियोजकवशानुगा
तया नियुक्तै प्रभुभि पाल्यते भरतावनी ।। १५

आग्ले नियोजकास्सर्वे प्रायश कार्मिकप्रजा
तेषा तु जीविका सर्वा देशादस्मात्प्रवर्तते ।। १६

स्वार्थ विहाय त इमे नेंगन्ते ऽस्मद्विवृद्धये
'मार्ले' महाशयो वास्तु वैसरायस्तथाऽपर ।। १७

नियन्त्रित किन्नु कर्तुमीष्टे स्वाग्लप्रभूत्तमैः
आग्लहैन्दवनाथानामत्रत्याना दुरीहितम् ।। १८

श्लो।। गण्डस्योपरि पिटकस्सवृत्तो हि न सशय
शान्तिसस्थापनमिषाद्देशादस्मान्निरन्तरम् ।। १९

धनराशि प्रगृह्णन्ति दरिद्रा तेन भारती
दयादाक्षिण्यसम्पत्ती राजकीये नु मृग्यते ।। २०

अस्माकमक्षि विवृत कालेन महताऽधुना
'कांग्रेस' संस्थाबीजभूतो 'ह्यू म्' नामाऽऽग्लेयसत्तम. ।। २१

अधिकारस्थितैराग्लैर्यादृशैस्तादृशैरपि
धनिकैर्मध्यगैर्वाऽपि कार्मिकैरथवा परै ।। २२

न दीयते भारताना स्वातन्त्र्यफलमण्वपि
इति ब्रू ते सुविस्पष्टमाग्लेयाना मनोगतम् ।। २३

लालालजपतीन्द्रोऽपि तत्र गत्वा चिर वसन्
निवृत्य तदिद सत्यमुदाहरदतिस्फुटम् ।। २४

महाक्षोभे प्रचलति भारत्या शान्तिलिप्सया
'विक्टोरिया' महाराज्ञी चक्रे प्रकटन प्रियम् ।। २५

प्रशान्ते भारते सम्यक् तन्नयज्ञैरध कृतम्
आंग्लदेश्या अल्पसख्या भीषयन्तो निजायुधै ।। २६

षट्त्रिशत्कोटिसख्याकान् स्वेच्छया पालयन्ति न
आर्थिकन्यायाविद्यादिस्थानेषु बहुभारता ।। २७

साहाय्य कुर्वते तेषा दास्यवृत्त्या नियन्त्रिता
तेन ब्रिटीषुराज्याङ्गचक्र भ्रमति सर्वतः ।। २८

श्लो ।। आदौ विदेशवस्तूनां बहिष्कारो विधीयताम्
न्यायस्थानाग्लविद्यादिस्थानानां च बहिष्कृतिः ।। २९

क्रमेणाग्लेयसंसर्गबहिष्कारो विधीयताम्
स एवास्त्रं च शस्त्रं च स्वाभेद्यकवचोऽपि नः ।। ३०

महाबीजाक्षरो मन्त्रः सर्वाभीष्टप्रदायकः
अद्य वा फलनिष्पत्तिरथवा भाविजन्मसु ।। ३१

यदा कदा वा भवतु यत्नः कार्यस्समैर्जनैः
बहिष्कारादृते नान्यत्साधनं संप्रदृश्यते ।। ३२

आग्लहैन्दवदुर्बोधादान्दोलनशतानि न
अधिकारमदाविष्टा नाग्लेया जानते क्वचित् ।। ३३

तद्बहिष्कृति रेवैका तेषां हन्ति मदान्धताम्
चेतयन्नित्युपन्यासैर्विरराम सुधीवरः ।। ३४

कालीघट्टपुरे वस्तुप्रदर्शनमहोत्सवे
'मिन्टो' राग्लप्रभोरुक्तीः खण्डयन् व्याजगर्भिताः ।। ३५

महत्तरमुपन्यासं चक्रे संप्रधिया वरः
पावनेऽस्मिन् स्वदेशीयप्रदर्शनमहोत्सवे ।। ३६

राजनीतेस्तु सम्बन्धो न योज्यइति तद्गिराम्
सारमादाय तिलशः स्तिलकोऽखण्डयद्गिराम् ।। ३७

'जर्मनीफ्रासु' देशीया स्वार्थसंपोषणादृताः
करं विदधिरे भूयः परदेशीयवस्तुषु ।। ३८

श्लो।। तद्वद् ब्रिटीषुभिः कार्यं परदेशीयवस्तुषु
कारागृह्णमत्यन्तमस्मद्देशस्य वृद्धये ॥ ३९

न कृत तैस्स्वलाभाय तदस्माभिर्विधीयते
न कुत्सिता भारतीयास्स्वदेशक्षेमकाक्षिण ॥ ४०

कुत्सित वचन तस्य नादेय त्याज्यमेव न
राजकीयस्वदेशीयवाणिज्यद्वितयस्य च ॥ ४१

आग्लादिबहुदेशेषु दृश्यते नान्तरीयता
अस्माभिरपि काम्या सा स्वदेशक्षेमहेतवे ॥ ४२

अस्मद्देशाभिवृध्यर्थं यद्यत् श्रेयस्कर भवेत्
स्वदेशीति पदेनैव सगृहीतमिति स्थिति ॥ ४३

इति 'मिंटो' वचस्सम्यक् खण्डयन् धीरसम्मतम्
असहायमहाशूरो निश्चक्राम सभाङ्गणात् ॥ ४४

कदाचित्तिलकश्श्रीमान् कलकत्तापुरागणे
ब्रिटीषुराजनीतेस्तु व्याकरोदान्तरस्थितिम् । ४५

अस्मद्देशीयराजन्यै रन्योन्यकलहप्रियै
छिन्ने भिन्ने स्वदेशेऽस्मिन् ब्रिटीषुपरिपालनम् ॥ ४६

अभ्यनन्दन् भारतीया देशशान्तिमभीप्सव
नैदानीमभिनन्दन्ति बहुदोषनिरीक्षणात् ॥ ४७

न नस्समुचिता देशे क्वापि विद्या प्रचालिता
कला परिश्रमा गृह्या क्षीणतामुपलम्भिता ॥ ४८

शेष॥ निधाय दासता मूर्ध्नि पालयन्ति निरन्तरम्
भेदयन्तो भारतीयान् तत्तादृग्भि प्रलोभनैं ॥ ४९

'विक्टोरिया' माहाराज्ञीवाग्दानसफलीकृति
अशक्येति स्वय ब्रूते 'कर्जन्' प्रभुशिखामणि ॥ ५०

नातिक्रामन्ति लवश रीतिं ता स्वार्थपोषणीम्
वृथा हि जायतेऽस्माकमाक्रन्दितमनारतम् ॥ ५१

'जिजिया' करसन्दर्भे ज्ञात्वाऽनिष्ट प्रजातते:
महदान्दोलन चक्रे शिवाजिर्नयकोविद. ॥ ५२

वङ्गदेशस्य भङ्गो नस्तादृशोऽद्य पुरस्थित॰
स्वराष्ट्रस्य विभङ्गोऽय म न क्षेमाय कल्पते ॥ ५३

न स्वातन्त्र्य किञ्चिदपि स्वबुद्धया प्रतिदीयते
सभूय सर्वदा सर्वैरान्दोलनमनारतम् ॥ ५४

कर्तव्यमेव सहसा केन्द्रीकृतबलोर्जितै.
यदन्यत् क्रियते कार्यं तद्वृथा कालयापनम् ॥ ५५

समेतैर्बद्धकटिभिश्श्रेयसे न विलब्यताम्
यदतीत पुनर्नैति कार्यं कार्यविशारदा ॥ ५६

बहुना किं प्रलापेन कार्यशूरा भविष्यथ
एवमूचे महाधीरः देशकालविभागवित् ॥ ४७

श्लो॥ विरामभूमिर्मनसो हृदरुध्वा
प्रज्ञाझरी श्रीतिलकोत्तमस्य ।
यया दुरन्तानपि कार्यघट्टान्
सोऽतीतरद्वैर्यरमाविलासि ॥ ५८

गङ्गाधरस्य वचनामृतभव्यधारा-
सशोधितान्यपरिपालनलब्धपङ्का ।
श्रीभारती विलसतात् परितस्स्वतन्त्र-
भावेष्टगन्धपरिलिप्तनिजाङ्गयष्टि ॥ ५९

इति श्रीलोकमान्यचरिते कालीबट्टनपरप्रसङ्गा
नाम नवम स्सर्गः ॥



देश्यसत्यभा = The National congress.
कलकत्ता = Calcutta
वैसराय = Viceroy
ह्यूम्नामा = A. O. Hume
आग्लहैन्दव = Anglo Indian
उपन्यासः, प्रसङ्गः = A speech
वस्तुप्रदर्शनम् = Exhibition.

## अथ दशमस्सर्गः ।

श्लो।। सूरत्पुरीदेश्यसभाविच्छेदनकथानकम्
सशृण्वद्भिस्समावधान तिलको नैव निम्बते ।। १

कलकत्तामहापुर्यां गते वर्षे सभासदैः
चत्वारि तीरितान्यासन् कृतान्यधिकसंख्यया ।। २

स्वराज्य, स्वीयविद्याच विदेशीवस्तुन्यक्कृतिः
प्रोत्साहो निजदेश्यानामिति प्रोक्ता चतुष्टयी ।। ३

आगाम्यब्दे नागपुरे कृत्वा लजपतिं विभुम्
भारतीयमहासभाकर्तव्येति सुनिश्चितम् ।। ४

गोपालकृष्णप्रमुखा ये सन्ति मितवादिनः
विपर्यस्यपुरावृत्त 'सूरत्' नगरसङ्गमे ५

'रासबीहार' नेतृत्वे सभां चक्रु' प्रयत्नत
तीरितान्यन्यथाकर्तुं चत्वारि मितवादिषु ।। ६

यतमानेषु सदसि जगर्ज तिलक स्सुधी'
तस्य वा तस्य लेखस्य प्रवेशो नाभ्यदीयत ।। ७

सभामुखे महाधीरस्तिष्टन्नुच्चैर्जगर्ज हा
अधोगनिस्तीरितानां भिया यदि कृता भवेत् ।। ८

श्लो॥ जातीयभावसर्वस्वमेवेति विभाव्यताम्
पुरो गतिर्वा क्रियतां यदिवाऽस्तु यथास्थिति ॥ ९

तीरितानां हि न्यक्कारो न न. क्षेमाय कल्पते
पूर्णराज्यविदेशीयबहिष्कृतिकथाद्वयात् ॥ १०

मितवादिमहानाथा बिभ्यात्थाहो ! मुहुर्मुहुः
'काग्रेस्' सभामहादर्शा शिरसोह्या महाजनै' ॥ ११

ब्रूते 'मार्ले' महामन्त्री, 'टैम्स्' पत्राधिपोपि च
भारते दुर्लभतर स्वपालनमिति स्फुटम् ॥ १२

उद्घाटयन्ति बहुधा भारतानामशक्तताम्
धिक् धिग्जीवितमस्माक दिग्धाना परहेलया ॥ १३

अस्माक जन्मना मातुरजेव फल भवेत्
'ट्रान्सवाले' भारताना शिर करविधायिन ॥ १४

शासनस्य निरासाय कृते देशीयतीरिते
मितवादिमहानाथै रङ्गीकृतिरुदीरिता ॥ १५

हिन्दूक्षेमविधायिन्या कुतो भीतिर्बहिष्कृते.
इत्येवमालपन्नुच्चै र्जगर्ज तिलकस्सुधी. ॥ १५

महान् कोलाहलो जज्ञे पक्षयोरुभयोरपि
निनिन्दुर्ग्राम्यवचनै रन्योन्यमविशङ्कितम् ॥ १७

क्रमश. पादरक्षाणा प्रयोगो तत्र वै कृतः
प्राणरक्षातुरा सभ्या नानादिक्षु पलायिता. ॥ १८

श्लो॥ प्रयागनाम्नि नगरे स कदाचिन्महामति
देशस्थिति समुद्दिश्य जगादैव सत्सङ्ग्रहम् ॥ १९

असिना निर्जिताऽऽङ्ग्लेयैरसिना पाल्यतेऽधुना
भारती भूरमा चैय प्रार्थनाभिर्न दीयते ॥ २०

अस्मत्परिश्रमादीना मपाया मूलघातिन
क्रियन्ते गूढदुर्वृत्त्या स्वार्थरक्षणलालसै· ॥ ११

प्रभुसेवानुकूला या सा विद्या प्रविचाल्यते
भारतोज्ञानविज्ञानबीजाङ्कूरा पुरातना. ॥ १२

समूलकाषमुत्पाट्य नाशिता बुद्धिपूर्वकम्
बिरुदाना प्रदानेन सभ्यत्वादिनियोजनै· १३

वच्यन्ते भारतीया हि कतिचित्स्वार्थलम्पटा
स्वातन्त्र्यकामनाऽस्माक तैरेव विनिगृह्यते ॥ १४

परिश्रमाणां प्रोत्साह स्वदेशे यादृगीप्सित
न तादृग्भारते देशे कलयाऽपि विधीयते ॥ २५

आत्यन्तिकी विवृद्धिर्वा विनष्टिर्वा भवेद्द्विधे
न मे माध्यमिकी वृत्ति. प्रमोदाय प्रकल्पते ॥ १६

मानवावा स्वभावोऽय सर्वदा वृद्धिकामना
यत्नेनैव सा लभ्या विना यत्नेन नाप्यते ॥ १७

जातीयविद्या सर्वेषा योगक्षेमविधायिनी
श्ववृत्तिविद्ययाऽऽस्माक दास्यमेव स्थिर भवेत् ॥ १८

श्लो । निरङ्कुशतया कार्य हिन्दूदेशस्य पालनम्
इति 'मार्ले प्रभुर्ब्रूते, स्वतन्त्राशयसभृता. ॥ २९

शृण्वन्तु सोदरा वाणी मम भूतार्थवादिनः
महोद्यमस्स्वदेशोयस्स्वशक्त्या विधीयताम् ॥ ६०

जातीयविद्यामुद्दिश्य 'बार्सी' नगरसत्तमे
उपन्यासमसौ चक्र गम्भीरमतिविस्तृतम् ॥ ३१

उच्चारो लेखनवाऽपि न विद्येति निगद्यते
अनुभूति· प्राक्तनाना ययाऽस्माक निवेद्यते ॥ ३२

सा विद्या सर्वविज्ञानसधुक्षणपरायणा
सर्वासामपि वृत्तीना विद्या परमसाधनम् ॥ ३३

परैरुपद्रुतास्सर्वे स्वदेशीया परिश्रमाः
रसपूर्णा इक्षुशाखाश्शर्करोत्पत्तिहेतवः ॥ ३४

जायन्ते भारतक्षेत्रे शर्करा नात्र जायते
'मारिष्' द्वीपसमुद्भूता शर्कराऽत्रोपयुज्यते ॥ ३५

पञ्चषाः कोटयस्तेन रूप्याणा प्रतिवत्सरम्
खण्डान्तराणि धावन्ति दरिद्रा तेन भारती ॥ ३३

पारिश्रमिकविद्याना बोधिनी भारतावनौ
न क्वापि दृश्यते पाठशाला प्रभुभिरादृता ॥ ३७

जर्मन्यादिषु देशेषु परिश्रमकलालया.
दृश्यन्ते बहुलास्सर्वसम्पद्वृद्धिविधायिन ॥ ३८

श्लो॥ अत्र सत्यंब्रवीम्येतन्निबोधत । महाजना ।
आग्लेयाना श्रामिकाणा वणिजामपि हस्तयो ॥ ३९

रीतिरस्मत्प्रभुत्वस्य यन्त्रपाञ्चालिकायिता
तैरेवात्र नियुज्यन्ते शासका परिपालकाः ॥ ४०

हृदि कृत्वा ततस्तेषां योगक्षेम प्रपाल्यते
परिश्रमाभिवृद्धिर्न म्तेषा वृद्धिनिरोधिनी ॥ ४१

एकामिषैकगृघ्नूना न मैत्री घटते क्वचित्
तेषा चित्त चिर ज्ञात्वा नवरोजिर्न्यवेदयत् ॥ ४२

न किञ्चिदपि कुर्वन्ति भारतेष्ट ब्रिटीषव
अस्माकमाग्लशालासु श्ववृत्तेरुपबृहणी ॥ ४३

विद्योपदिश्यते भूय जातिविद्या न किञ्चन
आग्लेयविद्यावैदुष्यवैभवस्यार्जनेन नः ॥ ४४

वृथाप्रयास , कालस्य यापन च, वृथाव्ययः
व्यामोह परभाषासु, दास्यदौर्भाग्यदोहृदम् ॥ ४५

परभाषाकृतुकिन कञ्चनाग्लेयबालकम्
न शृणोमि न पश्यामि धिङ्न कापेयचेष्टितम् ॥ ४६

अस्माभिस्सङ्गतैस्सर्वैर्बालानामभिवृद्धये
जातीयसत्कलाशालाः स्थापनीया. प्रयत्नत ॥ ४७

जर्मन्यादिमदेशेषु ताभिरेव महत्तरा
सर्वतोमुखसम्पत्ति रुदितेन्यनुशश्रुम ॥ ४८

श्लो। राजकीयपरिज्ञान बालाना मभिवृद्धिकृत्
चत्वारिंशन्महाकोटिरूप्याणा भूरिनिर्झरा· ॥ ४९

प्रतिवर्षं प्रयान्त्येव खण्डान्तरमहोदधीन्
अन्नवस्त्रविहीनानामस्माक दुर्भरास्थिति ॥ ५०

क्षुधावलीढा बहवो नित्य यान्ति यमालयम्
नवरोजिमुखप्राज्ञस्वानुभूतिकथानकम् ॥ ५१

'विक्टोरिया' महाराज्ञी वाग्दानाना तिलोदकम्
बालकैरपि बोद्धव्यमितोऽन्यद् बहु विद्यते ॥ ५२

यो न जानाति राज्याङ्ग न स जानाति किञ्चन
तस्य विद्या च विज्ञानमजागलकुचोपमे ।। ५३

अवश्यमनुसन्धेया मतविद्या च बालकै.
परनागरतामोहस्तया दूरमपोह्यते ॥ ५४

पापभीतिर्दैवचिन्ता तस्यामेवप्रतिष्ठिते
स्वदेशमातृभक्तिश्च मतान्तरसहिष्णुता ॥ ५५

विनयार्जवसौहार्दसामरस्यमुखा गुणा·
सम्भूय मतविद्याया प्रोल्लुठन्त्युत्तरोत्तरम् । ५६

यो न वेत्ति स्वक भूत न स गन्तु पुरोऽर्हति
अत्र स्वमतदौर्गत्यात् कैस्तवा मतकैतव·त् ॥ ५७

दूरादागत्य स्वाग्लानामुत्कर्षं बोधयन्त्यहो
ऐहिकामुष्मिक श्रेयस्सम्पदुन्मीलनक्षमा ॥ ५८

श्लो.। मतविद्या बोधनीया बाल्य एव सुपुष्कलम्
आर्द्रे घटे कृता रेखा न ततोऽपि निवर्तते ।। ५९

एव स्वजातिविद्यायास्स्वरूपमतिसंग्रहम्
उपदिश्य महाधीरः विससर्ज सभाङ्गणम् ।। ६०

प्राचीननव्यतरसस्कृतिसाम्ययोग-
सपादनप्रथितशक्तियशोधरस्य ।
गङ्गाधरस्य चरितामृतवीचिमाला
डोलाविहारसुखमाप्य, बुधा रमन्ते ।। ६१

इति श्रीलोकमान्यचरिते सूरत, प्रयाग, बार्सी
नगरप्रसङ्ग नाम दशमस्सर्ग ।।

---

तीरितानि = Resolutions
ट्रान्सवालः = Transval, The srouth African city
मारिषद्वीप. = Manritins Island
नागरता = Civilization
क्रैस्तवा. = Christians.

## अथ एकादश स्सर्गः ।

श्लो॥ मुम्बापुरवरे धीर ताम्रखण्डकर प्रति
ददावुपन्यासमसौ सर्वश्रुतिमनोहरम् ॥ १

एकैकशिरसा देयमेकैक ताम्रखण्डकम्
सञ्चितेन तदर्थेन स्थापनीया. परिश्रमा ॥ २

तेषु जायेत बहुलस्स्वाभिमान प्रजातते·
सहस्रशो लक्षशश्च दातु शक्ता इहोद्यता: ॥ ३

तथाप्यत्यल्पदानेन वर्धनीया परिश्रमा
बहूना मादरात्तेषु वृद्धिरात्यन्तिकी भवेत् ॥ ४

शङ्कितेन प्रभुत्वेन कार्यशाला परीक्षिता
दोषलेसमपश्यन्तो निवृत्ता परिशोधका· ॥ ५

कोट्य पञ्चदश स्त्रीणा वर्तन्ते भारतावनौ
धार्यन्ते काचवलयास्ताभि र्नानाविधाश्शुभा· ॥ ६

पर्याप्ता काचनिर्माणसामग्री नात्र दृश्यते
तन्निर्माणेऽपि वैधुर्यं लज्जा जनयतीव न. ॥ ७

'कीरुहार्डी' त्वाङ्ग्लसुधी भारतग्रामजीवितम्
द्रष्टु मया सह प्रायाग्द्राम शिवपुराभिधम् ॥ ८

श्लो।. दृष्ट्वा स मुमुदे काचवस्तुनिर्माणकौशलम्
प्रभुप्रोत्साहवैमुख्य विज्ञायास्माभिरीरितम् ९

विशालभावसम्पन्न ललज्जे सोऽग्लकोविद
आवश्यकी पाठशाला काचनिर्माणबोधिनी ॥ १०

कर्मागाराणि भव्यानि बहुधाऽऽवश्यकानिनः
षष्टिरूप्यसहस्राणि सञ्चितान्यल्पवत्सरै ॥ ११

कार्याणा फलनिष्पत्ति यत्नगौरवमाश्रिता
प्रभुताऽण्यद्य जानाति नस्सकल्पविशुद्धताम् ॥ १२

शुभोदर्कतयाऽस्माक सर्वं सम्पद्यतेऽधुना
सम्भ्रियन्तां समुत्साहास्सर्वतोमुखवाहिन. ॥ १३

आज्ञाज्योतिरुदेत्यस्मात् प्राचीदिङमुखमण्डलात्
इत्येवमुपदिश्यासौ विश्रान्ति समुपेयिवान् ॥ १४

एकदा राष्ट्रीयसभा 'बेलगाम्' नगरसत्तमे
सङ्गता तत्र गत्वाऽसौ राजभक्तिपुरस्कृतम् ॥ १५

उपन्यासमदात् श्रीमानूर्जितं रोमहर्षणम्
कामयेमहि साम्राज्यमाग्लेयानां सुरक्षितम् ॥ १६

बहुधोपकृत तेन भारतस्य पुराऽऽपदि
न विस्मराम स्स्वप्नेऽपि न कृतघ्ना भवेमहि ॥ १७

स एव चक्रवर्ती नस्सर्वदाऽस्तु सुरक्षितः
नान्यप्रभुत्वगन्धोऽपि भारतीयाय रोचते ॥ १८

श्लो ' शङ्काहतात्मभिश्चक्रे भारत्यांग्लेयपालकै
निस्तेजस्का च निर्वीर्या दारिद्र्ये च प्रतिष्ठिता ॥ १९

भूयसाऽपकृत तेन देशयोरुभयोरपि
तदिद विवृतद्वारमभूदस्मिन् महाहवे ॥ २०

भवितश्शक्तिर्बहुमुखी भारतीयै प्रदर्शिता
सङ्ग्रमे समुपोढेऽस्मिन् जर्मन्या प्राणसकटे ॥ २१

बहो कालाद्भारतीयं नाभविष्यन्निरायुधा
प्रैषयिष्यदसौ भूरि लक्षशो योधसत्तमान् ॥ २२

त्रिंशत्कोटिजनाकीर्णां सायुधां भारतीमिमाम्
स्मरता प्रतियोधाना जायेत हृदि कम्पनम् ॥ २३

निरायुधक्रियारूपशासन परिह्लीयताम्
इत्येव बहुधाऽस्माभि प्रार्थित नैव तत्कृतम् ॥ २४

स्वरश्चाऽपि क्रूरजन्तोर्भारतीयस्य दुश्शका
निरायुधत्व भारत्या अवमानाय कल्पते ॥ २५

अशिक्षणादप्रगल्भा निस्तेजस्का निरायुधा
न ोपकुरुते तेषां भारती युद्धसकटे ॥ २६

परिग्रहोऽनुमन्तव्य तस्मादायुधसन्तते
इति निश्चितमावेद्य सभां तत्याज धीरधी. ॥ २७

अहम्मद्नगरे काचित् प्रवृत्ता मण्डलीसभा
तत्र वैश्यान्समुद्दिश्य जगाद वदतांवर ॥ २८

श्लो॥ राजभक्तौ च साहाय्ये ज्ञानविज्ञानवैभवे
धैर्य ाहसकृत्येषु भव्यसस्कृतिसौष्टवे ॥ ३९

श्राग्ल सामन्तपौरेभ्यो न न्यूना भारतप्रजा:
तथाऽप्यस्मासु सर्वत्र न्यूनतायाः प्रदर्शनम् ॥ ४०

स्मरणादेव जनयेदसह्यं वेदनाभरम्
अन्तर्भागिबलेनैव साम्राज्य बलवद्भवेत् ॥ ४१

ब्रिटीषवौऽद्य जानन्ति भारतीयान्तरस्थितिम्
आन्दोलनम्यावसरस्सर्वथा समुपस्थित· ॥ २

कीर्तनीयश्च मन्तव्यस्स्वराज्यमितिमन्त्रराट्
इन्युक्त्वा वैश्यजातीयान् निर्ययौ स सभाङ्गणात् ॥ ४३

मुम्बाप्रान्तीयकृषिकै रादृत स्ससुधीस्तदा
'चिकोडी' ग्राममभ्येत्य तत्रैवं समजल्पत ॥ ४४

दरिद्रोऽस्मि यथा यूयं तथाऽहमपि कर्षका·
जाने वो जीविकारेखां सर्वकष्टैरुपद्रुताम् ॥ ४५

आंग्लेयप्रभवोऽद्यत्वे संग्रामाङ्गणवर्तिनः
सार्थमेकशत कोटीरूप्याणा भारतावने ॥ ४६

साहाय्यमभिकाक्षन्ते योद्धुयोधांश्चभूरिशः
महत्यस्मिन् सम्परायं लब्धे तेषा महाजये ॥ ४७

स्वराज्यदानशपथं कारयित्वा यथोचितम्
प्रार्थित सर्वसाहाय्य सर्वथा कार्यमेव न ॥ ४८

श्लो॥ सर्वान्विभेदान्विस्मृत्य प्रभुभक्तिपरायणै
उपस्थातव्यमस्माभि स्सहि धर्मस्सनातन ॥ ४९

विना कष्टै. क्वचिदपि न लभ्य सुखमुत्तमम्
स्वराज्यसुखमत्यन्त नाकाशान्निपतिष्यति ॥ ५०

सर्वप्राणपणेनापि स्वराज्यं प्राप्यमेव न.
आग्लप्रजाना सौमुख्य श्रूयतेऽस्मासु सांप्रतम् ॥ ५१

लब्ध्वा स्वराज्यवाग्दानं साह्यं शक्त्या विधीयताम्
एव मुक्त्वा प्रसङ्ग स्व, विरराम सुधीवर ॥ ५२

इति श्रीलोकमान्यचरिते, मुम्बापुर, बेलगाम, अहम्मदनगर,
चिकोडीग्रामप्रसङ्गानाम एकादशस्सर्ग ॥

---

**काचवलया:**=Bangles.
**सस्कृति:**=Culture.
**अन्तर्भागबल:**=Internal strength.

# अथ द्वादश स्सर्गः ।

श्लो।। गोपालकृष्णनिर्याणवार्ता श्रुत्वा विषण्णधीः
श्मशानवाटिका गत्वा विललापाकुलेन्द्रियः ।। १

आजानपावनोदीर्णचारित्रकविभूषणः
एतादृशो धन्यजन्मा भारत्या नैव दृश्यते ।। २

करुणारससर्वाभिसारसम्मर्दचेतनः
भारताम्बाकिरीटाग्रकोहिनूर्वज्रभूषणम् ।। ३

महाराष्ट्रमहीभागसारसर्वस्वपेटिका
निर्वर्त्य जीवितफल त्यक्त्वाऽस्मान् शोकसागरे ।। ४

पुनरावृत्तिरहितवर्त्मना क्वनु वा गतः
तदीयलोपसम्पूर्तिं न कश्चित्कर्तुमर्हति ।। ५

देशमातुर्मया भूय. कृत ऋणविमोचनम्
इत्येव परमेशस्य सन्निधौ साक्ष्यमुत्तमम् ।। ६

वक्तुमर्हति गोपालकृष्ण एव न चेतरः
न भूपतिर्नापि धनी सामान्योऽसी गृही मतः ।। ७

लोकातिगमहामेधाशक्त्या स्वकृषिवैभवात्
साहसेन च धैर्येण त्यागदाक्षिण्यसम्पदा ।। ८

श्लो॥ सर्वातिशायियशसा विलिम्पन् सर्वतो दिश
स्वधृत कार्यसभार निधायास्मद्भुजार्गले ॥ ९

परमेशानसान्निध्य मपरावृत्तये ययौ
तदनुष्ठितमार्गेण तन्चिकीर्तिसन्तते ॥ १०

अनुष्ठानात्तदीयात्मशान्तिरात्यन्तिकीभवेत्
इत्थ विलप्य बहुधा श्मशानात्स न्यवर्तत ॥ ११

अथ मुम्बापुरीरत्ने तन्निर्याणमनुस्मरन
शुशोच तिलको भूयश्शोकोपहतचेतन· ॥ १२

अनाथशिशुसंरक्षादीक्षायां दीक्षितात्मन·
यशोभि पुष्कलैस्तस्य श्वेतन्ते सर्वदिक्तटा ॥ १३

राजकीयमहारङ्गे मयाऽ्य प्राक्प्रवेशित
निरन्तरकृषेरस्य प्राणहानिरजायत ॥ १४

फर्गूसन्निति विख्यातकलाशालान्तरे समा
अष्टावावामुपाध्यायौ तेन जाने तमन्तत ॥ १५

आशयेषु क्वचिद्भेद वर्तता नाम कि तत·
जानामि गुणसम्पत्ति जानामि हृदयान्तरम् ॥ १६

जीवित राजकीयेषु कार्यदीक्षा निरन्तराम्
चिरकालीनसाङ्गत्याज्जाने चारित्र मद्भुतम् ॥ १७

भारत्या गर्वसम्पत्तिसन्धाता मातुरीदृशः
तनयो विनयोदीर्णः सर्वकालेषु दुर्लभ· ॥ १८

श्लो॥ शोचित्वाल सदाऽस्माभि स्तस्य मार्गोनुगम्यताम्
एव विलप्य बहुधा निश्चक्राम सभाङ्गणात् ॥ १६

कालीघट्टमहापुर्यां भारतीयमहासभा
आनीबसन्ताभिधाया आधिपत्ये सुसङ्गता ॥ २०

तदाऽऽलीसोदरौ भव्यौ कारागारातिथीकृतौ
तयोर्माता द्रष्टुकामा ता सभा समुपागता ॥ २१

सरोजिनीप्रभृतय स्तामानर्चुस्समुत्सुका
लोकमान्यस्तदा चक्रे सदुपन्यासमुत्तमम् ॥ २२

वीरमाताऽसि भो देवि धन्याऽसि जगतीतले
कल्याणगुणमन्दारौ कमनीयाकृतिश्रियौ ॥ २३

अन्योन्यसदृशौ धीरौ सिंहसंहननावुभौ
पुत्रौ प्रसूय भवती स्त्रीजातिमतिरिच्यते ॥ २४

राजद्रोहाभिध दोष स्वरक्षकभटार्पितम्
आरोप्य तत्क्षणादेव कारागारातिथीकृतौ ॥ २५

चलितेन तृणेनापि वेपते प्रभुता हि न
विचारणाप्रहसन नापि किञ्चिदनुष्ठितम् ॥ २६

पाशव बल मालब्य दण्डोय विहितो हि तै
कश्चिल्लेखस्स्वगुरवे दिल्लीपुरनिवासिनै ॥ २७

राजद्रोहविषाकीर्ण ताभ्यां प्रेषित इत्युत
आरोपित प्रभुत्वेन दोष इत्यनुशुश्रुम ॥ २८

श्लो।। कीदृग्लेख कथ प्राप्त: कस्य हस्ताक्षराणि वा
नैतद्विमृष्ट यात्किञ्चित् न्यायस्थानेष्वहो बत ।। २९

मुधा बद्धौ महावीरौ स्वार्थलोलैर्निरङ्कुशै.
तयोर्जयपताकेद कारागारेषु बन्धनम् ।। ३०

यशस्य सर्वतोभद्र सर्वसस्तुतिभाजनम्
इन्द्रोपेन्द्रतनूजाभ्यां महाभागा यथाऽदिति ।। ३१

सुपर्णारुणपुत्राभ्यां यथावा विनताञ्चिता
तथात्व शोभसे देवि ! स्त्रीजारौ वरवर्णिनि ! ३२

सभापक्षेण ते देवि प्रणामानर्पयाम्यहम्
इति व्याहृत्य तिलक स्तूष्णीमास सभान्तरे ।। ३३

इति श्रीलोकमान्यचरिते गोपालकृष्णगोकुलप्रशसाप्रसङ्ग:,
अलीसोदरप्रशसाप्रसङ्गश्चेति द्वादश स्सर्ग: ।।

---

अलीसोदरौ=Showkat Ali and Mohammad Ali.
सरोजिनी=Srimathi Sarojini Naidu
विचारणा=A Trial.

## अथ त्रयोदश स्सर्गः ।

श्लो॥ एवमावर्तयन् चक्रं दूरादवहितेक्षणः
सञ्चचार महाधीरो भारत्या भारमुद्वहन् ॥ १

अत्रान्तरे महाघोरस्सङ्ग्राम स्समपद्यत
अत्रत्याङ्ग्लेयविभव भारत सैन्यमुत्तमम् ॥ २

सम्प्रेषयितु मुद्युक्तास्तानेव तिलकोऽब्रवीत्
किञ्चिदेवास्ति फलित वेतनोपात्तसैनिकै ॥ ३

आङ्ग्लेयसैनिकैस्साक प्रतिपत्ति स्समायदि
दीयेतास्मत्सैनिकाना प्रेषयाम सुसैनिकान् ॥ ४

पञ्चसाहस्रसङ्ख्याकान् समर्थान् प्रतियोधने
अन्यथैकैकयोधस्य प्रत्याम्नायतया पुन ॥ ५

शतरूप्याणि दास्याम. नात्र कार्या विचारणा
एवनु वदत स्तस्य नाजानन् ते मनोगतिम् ॥ ६

प्राभवोद्भूतगर्वान्धितमसावृतचेतसः
तस्य वाग्बन्धन चक्रुः प्रस्तुत्यायोधनोद्यमम् ॥ ७

तथाऽपि भारतीसैन्यसाहाय्येनैव सम्भृतः
तस्मिन् युद्धे जयस्तेषा माङ्ग्लेयानामपद्यत ॥ ८

श्लो॥ यियासुस्तिलको धीर 'लण्डन्' नगरमुत्तमम्
आगत्य मद्रनगरीमुवास दिवसद्वयम् ॥ ९

एवमूचे सभारङ्गे विषयास्तानुदाहरन्
सर्वमान्दोलन कार्यं भारते देश एव न ॥ १०

अन्यत्र गमनं व्यर्थमिति यो निश्चयः पुरा
युद्धानन्तरकालेऽस्मिन् विपर्येति स निश्चय ॥ ११

ब्रिटीषवोऽद्य जानन्ति निर्वीर्यकरणेन न.
समुद्भूत महानर्थं जित्वाऽप्यस्मिम् महारणे ॥ १२

तदय समयोऽस्माकं निवेदयितुमीप्सितम्
यथापूर्वं निराकर्तु मक्षमा हि ब्रिटीषव. ॥ १३

यथाकथञ्चित्ते दुद्युस्स्वराज्य सर्वकाङ्क्षितम्
इति मत्वा व्यवसिता गन्तु लण्डनपत्तनम् । १४

समुद्रयानमसकृत् प्रमादशत सङ्कुलम्
अनुग्रहेणेश्वरस्य श्रीमता माशिषा बलात् ॥ १५

सर्वं सम्पद्यते सम्यक् यास्यामो वयमुत्सुका
सर्वं प्रमादभूयिष्ट भवेद्दैवविपर्ययात् ॥ १६

भार निधाय तद्दैवे देशकल्याणकामिनः
पर साहस मालम्ब्य यास्यामो कार्यगौरवात् ॥ १७

अथ गहे गोकुलाख्ये महाराष्ट्रान्ध्रसोदरै
दत्तसम्मानपत्राणा मदादीद् शमुत्तरम् ॥ १८

श्लो।। विद्यानगरसाम्राज्यपालकै कल्पिताध्वना
अपालयन् महाराष्ट्रपालकास्स्वमही चिरम् ।। १९

शिवाजिप्रमुखा धीरा गुणग्रहणतत्पराः
तेनानपायसम्बन्ध महाराष्ट्रान्ध्रयोश्चिरात् ।। २०

अन्योन्यस्निग्धभावोपलिप्ता वर्तामहे वयम्
परभाषाप्रभुत्वाभ्या सम्बन्धा न स्तिरोहिता. ।। २१

प्राप्ते स्वराज्ये सहसा परभाषा गमिष्यति
भाषाराष्ट्रविभागोऽपि चिरादभिमतो मम ।। २२

सर्वानर्थप्रसवभूस्सर्वाभीष्टनिरोधिनी
परप्राभवलक्ष्मीर्न धिम् धिम् नृत्यति मूर्धसु ।। २३

स्वराज्यप्राप्तये सर्वे सङ्गता· प्रयतामहे
फल दैवबलायत्त प्रयत्नोऽस्मद्वशे वसेत् ।। २४

इत्य समाप्य वक्तव्य जयध्वानै. पुरस्कृत
प्रयाणाय मति चक्रे मित्राभ्या स पुरस्कृतः ।। २५

विहाय मद्रनगरी प्रतस्थे मुम्बयीं पुरी
आश्विनेयसदृक्षाभ्या मित्राभ्यां स पुरस्कृतः ।। २६

'माण्टेगु' मन्त्रिवर्यस्य नवीनं पालनाविधिम्
विम्रष्टु काचन सभा तदावर्तत तत्पुरे ।। २७

उपगम्य सभामध्य तद्विधि विममर्श ह्य
शुष्कप्रियवचोन्यासैः विधातु सुखमेव नः ।। २८

श्लो।। वाक्चातुरी सुमहती मन्त्रिणा सप्रदर्शिता
श्वपालनप्रदानस्य नावधिस्तत्र कल्पितः ।। २९

क्रमप्रदानमितियत् भवेद्वा शतवार्षिकम्
कलामात्रमिद दत्त कथ तुष्याम तावता ।। ३०

दश वा पञ्चदश वा वर्षाणामवधिर्यदि
विहित स्तेन तृप्याम. कि स्यात् शुष्कप्रियोक्तिभि ।। ३१

स्वराज्यदानमस्माकमाग्लाना चापि लाभकृत्
युद्धादिसकटेष्वेषामस्मत्साहाय्यमाप्यते ।। ३२

समानप्रतिपत्त्याद्या भारती स्ववशे यदि
आग्लराज्यरमा स्वप्नेऽप्यजय्या शत्रुकोटिभि· ।। ३३

विविच्य तदिद तत्र निवेदयितुमुद्यता
एव मुक्त्वा समामन्त्र्य सर्वानेव सभासद ।। ३४

जयध्वानमहापूर्णपूर्णपात्रसभाजित
कपर्दिचन्द्रपालाभ्या प्रतस्थे लण्डन पुरम् ।। ३५

परार्थमायोजितसर्ववृत्ते.
सर्वातिशायिप्रथितात्मशक्ते ।
गङ्गाधरस्य स्पृहणीयमूर्ते
न दुष्कर किञ्चिदिहोपपद्यते । ३६

इति लण्डनयात्रापूर्वरङ्गोनाम त्रयोदशस्सर्ग ।।

---

येह गोकुलाख्य· = The Gokhale hall.
भाषाराष्ट्रम् = Linguistic Province.

## अथ चतुर्दश स्सर्गः ।

श्लो॥ आङ्ग्लेयराजधानी तामपराममरावतीम्
प्रविश्य स सुहृत्तस्यास्सुषमा मवलोकयन् ॥ १

विस्मयोत्फुल्लनयन स्समचिन्तयदीदृशम्
दृष्टाऽपि नगरी पूर्व पुनर्नवनवायते ॥ २

प्रदर्शयितुकामेन सर्वतोमुखवाहिनीम्
समग्रा विभुता स्वस्य विधात्रेय विनिर्मिता ॥ ३

नाधिकावाऽपि सदृशी पुर्यस्या दृश्यते क्वचित्
इत्येवदृष्टमनसा ता पुरी मवलोकयन् ॥ ४

तास्तास्सभा प्रविश्यासौ सिहो गिरिगुहा इव
उपन्यासान् स्वराज्यार्थान् विदधे वाग्विदा वर ॥ ५

तयोपन्यासधोरण्या सञ्चचालेव सा पुरी
समेषा भारतीयाना निजराज्यैकवाञ्छितम् ॥ ६

न्यवेदयद्बहुमुख प्रामाण्याञ्चितयुक्तिभि
जङ्गमोऽय महानब्धि स्निग्धगम्भीरघोषणः ॥ ७

इति त मेनिरे सर्वे सभ्यास्तत्र समागताः
अत्रान्तरे तु विरते जर्मनीयुद्धसकटे ॥ ८

श्लो॥ 'पारिस्' नामपुरोत्तसे काचित्सन्धिसभाऽऽदृता
तत्तद्देशीयसचिवप्रमुखास्तत्र सङ्गताः ॥ ९

तत्र गन्तु सुधीसम्राडाज्ञापत्रमयाचत
न्यषिध्यताङ्ग्लेयं वरैस्तत्र गन्तु स सत्तम ॥ १०

भीतिहेतु स विज्ञाय तेषा विस्मितमानस.
तत्सभापति मुद्दिश्य कञ्चिल्लेखमनुत्तमम् ॥ ११

प्रेषयामास सुश्लिष्टं सर्वविस्मयभाजनम्
श्रीक्लेमेंको ! सभाध्यक्ष ! सेखोऽत्र्य तत्सभान्तरे ॥ १२

उद्घाट्यतां करुणया भूतार्थप्रतिवेदक·
विभज्य पाल्यते द्वेधा भारतोर्वी ब्रिटीषुभिः ॥ १३

स्वतन्त्रराज्यभूभागः प्रजाभूभाग इत्यपि
'बिकनेर' 'महाराजः' 'सिन्हा प्रभुवरस्तथा ॥ १४

भागद्वया त्सुसंशोध्य सधिसभ्यतयाऽऽदृतौ
नैतौ प्रजाप्रतिनिधी ब्रिटीषुवशवर्तिनौ ॥ १५

दिल्लया भारतजातीयसभयेदं निवेद्यते
अधिकारविधानेषु पाल्यपालकयोर्द्वयो ॥ १६

महदन्तरमस्त्येव तथाऽपि प्रभुसत्तमै.
प्रजापक्षो नाद्रियते गन्तु सन्धिसभान्तरम् ॥ १७

वैशाल्येन प्रजासख्याबाहुल्येनार्थसम्पदा
प्रधानजातितामेषा भारती सर्वथाऽश्नुते ॥ १८

श्लो॥ ईर्ष्या वा द्रोहचिन्ता वा भारत्यां नोपपद्यते
आङ्गलसाम्राज्यरक्षाया जातीयसमितेरपि ॥ १९

उपकुर्याद्बहुमुखं स्वतन्त्रा यदि भारती
दास्यशृङ्खलबद्धेय स्वान्तश्शक्तिप्रदर्शने ॥ २०

अलसा दीनदीनेव कोणे तिष्टति कुत्रचित्
भारतामिषमादातु मैरोपाखण्डवासिन. ॥ २१

विवदन्ते दिवारात्र त्रुषा सुन्दोपसुन्दवत्
आसियाऽमेरिकाखण्डे धनधान्यादिसङ्ग्रहे ॥ २२

अहंपूर्विक्या नित्य प्रयतेते यथायथम्
तेन शान्तिकथा लोके विमृग्या सर्वतो भृशम् ॥ २३

आन्तरङ्गिककार्येषु स्वतन्त्रा यदि भारती
सर्वोपकारपरमा शश्वदेव भविष्यति ॥ २४

भूखण्डे पञ्चमो भाग' भारतीया वसुन्धरा
सर्वेषामपि खण्डानां वज्रदुर्गं भविष्यति ॥ २५

लुप्तवीर्या निरुत्साहा निस्सरेवाद्य दृश्यते
दास्यमस्या दुराधर्षं दौर्भाग्य जनयत्युत ॥ २६

प्रतिहन्ति पुरोवृद्धि मैहिकामुष्मिकीमपि
सभा महम्मदीयाना हैन्दवानां च सङ्गता ॥ २७

कैनडादिमसामन्तराज्यतुल्याधिकारिताम्
काक्षते स्वान्यखण्डानामपि श्रेयोविधायिनीम् ॥ २८

श्लो॥ परिश्रमाणामुद्धार दारिद्र्यस्य निबर्हणम्
साकेतिकप्राथमिकमुख्यविद्याभिवर्धनम् ॥ २९

वर्णाश्रमाचारधर्मविशेषपरिरक्षणम्
इत्यादिक स्वय कर्तुमर्हति भारतप्रजा ॥ ३०

पाश्चात्यभावव्यामुग्धैर्नैतत्किञ्चिन्निरुह्यते
सर्वमेतत् सुसन्धातु भारतैरेव शक्यते ॥ ३१

ब्रिटीषुकार्मिकवरा जानन्त्येतदनाकुलम्
'रोमनैथन्स' देशाभ्या प्रागेवास्माकमूर्जितम् ॥ ३२

नागरत्वमिति ज्ञेय चारित्रपरिशोधनान्
अलक्ष्येन्द्रस्य यात्राया. पूर्वकालीनमेव न. ॥ ३३

राज्यपालनचातुर्यवैभव सुप्रतिष्ठितम्
न सहेमहि मिथ्याभिशसन परराट्कृतम् ॥ ३४

तत्तद्राजन्याकोद्भूतविभेदरुपवर्धिता
प्रजाविच्छित्तिरस्माक दोषो मूर्ध्नि प्रतिष्टित ॥ २५

न्यायस्य शासनाना च कार्यनिर्वहणस्य च
तिस्रश्शाखा' प्रवर्तन्ते 'वैसराय' वशानुगा ॥ ३६

भारतथा राज्यतन्त्राणा सर्वेषामीश्वरो हि स
नाममात्रेण वर्तन्ते लण्डनूनगरसत्तमे ॥ ३७

इण्डियाकार्यदर्शी च तद्वर्गीयाश्च केचन
मन्त्रिवर्यस्तु 'माटेगु' जानीते भारतीस्थिति ॥ ३८

श्ल।। पालनापद्धतिस्तत्र सर्वथा न समञ्जसा
इति मत्वा नु विदधे नव्यं पालनशासनम् ।। ३९

तदेतत्कथित नाम्ना बाध्यतायुतपालनम्
तदाश्चर्यं विषाद च भारताना करोत्यलम् ।। ४०

निरङकुशाधिकारस्य लोपो नात्र विलोक्यते
'इण्डिया' प्रभुतापक्षे 'पार्लमेण्ट' सभासदाम् ।। ४१

नास्ति सम्बन्धइत्येव चतुरैर्वचनै कृतम्
राष्ट्रेषु द्वद्वप्रभुतापद्धति स्तत्र निर्मिता ।। ४२

तया क्रमेण राष्ट्रेषु प्रभुतासौष्टवोदये
भारतेऽ-ऽङ्ग्लप्रभुत्वस्य प्राभवं क्षीणतामियात् ।। ४३

इति नाम नवोत्पन्न बाध्यतायुतपालनम्
अधिकारेन दत्तेन नव्येनान्तर्विषेणहा ।। ४४

वैसरायप्रभुत्वस्य नैरङकुश्यं प्रसिध्यति
भारतीयानपि स्वार्थपरानात्मवशानुगान ।। ४५

सर्वत्र सर्वतन्त्रेषु वैसरायो नियोक्ष्यति
न तेनाभीष्टसिद्धिस्स्याद्भारतीयप्रजातते ।। ४६

बाध्यतापालन नाम बृतकोशातिकीसमम्
एव निरूपिता कार्यनिर्वाहकसभास्थिति ।। ४७

शासनाना सभारीतिं बाध्यतायुतपालने
शृण्वन्तु कथयाम्यद्य तत्र सभ्याश्शृत पुन ।। ४८

श्लो।। सप्तषष्टिस्तत्र सभ्या प्रजाप्रतिनिधीकृता
त्रयस्त्रिंशत्तत्र सभ्या प्रभुत्वेन नियोजिता ।। ४६

प्रजापक्षीयसंख्याया बाहुल्येऽपि न न· फलम्
'स्टेटकौन्सिलिति' ख्याता काचित्स्यादुत्तरा सभा ।। ५०

पञ्चाशत्तत्र सभ्या स्स्युः पूर्वशासनशोधका·
वैसरायनियोच्यास्स्युरेकोनत्रिंशदीप्सिताः ।। ५१

एकविंशतिसभ्यास्स्यु. प्रजापक्षसमुत्थिता
प्राक्सभा शासनश्रेणी मन्यथाकर्तुमुत्तरा ।। ५२

शक्नोति शासनसभा या, प्रभुत्वबलोर्जिता
आभासस्वर्णमेवेद बाध्यतायुतपालनम् ।। ५३

विभज्य नवराष्ट्राणि भारती परिपाल्यते
कार्यनिर्वाहकसभा नकस्मिन्नपि दृश्यते ।। ५४

केवल शासनसभा स्सन्ति राष्ट्रेषु सर्वत
प्रजाप्रतिनिधीना हि सङख्या तत्र विलुप्यनि ।। ५५

वङ्गनामनि राष्ट्रे तु सङख्याबहुलता स्थिता
तथाऽपि शासनश्रेण्याः कृताया अपि शास्त्रतः ।। ५६

कार्यनिर्वाहिवर्गस्य वशे स्थास्यति जीवितम्
प्रजाप्रतिनिधीना हि काश्चित् शाखा. करे स्थिताः ।। ५७

अधिकारिवशे काश्चित्तिष्टन्ति समभीप्सिताः
दश वर्षमिते काले गते 'लण्डन' पत्तनात् ।। ५८

श्लो।। कश्चित्सधस्समागत्य कर्ता‍‍‍स्मच्छक्तिशोधनम्
तत्रोत्तीर्णत्वमालक्ष्य वृद्धिर्दीयेत पालने ।। ५९

एवमेव क्रमेण स्यादृत्त न परिपालनम्
सैषा द्वन्द्वप्रभुत्वस्य पद्धति परिकल्पिता । ६०

परीक्षा भारतीयाना न कस्मैचन रोचते
तद्गर्भे बहवो दोषा प्रजाहित विरोधिन ।। ६१

अस्मत्कांक्षितमेतावत् सभ्याश्शृण्वन्तु सादरम्
युद्धसन्ध्यादिनिर्वाहि. परदेशप्रसङ्गज. ।। ६२

नौकासैन्यादिसम्बन्धी वर्तता प्रभुतावशे
हिन्दूसैनिकवर्गाणा स्वजातीयैस्समादर ।। ६३

दीयता तावता तृप्ति लभेमहि न सशयः
आन्तरङ्गिक कार्यालिसर्वनिर्वहणादिकम् ।। ६४

अस्मद्वशे सदा तिष्ठेत्सैषा न कामना परा
आङ्ग्लसाम्राज्यविच्छेद न कदाचित्सहामहे ।। ६५

आङ्ग्लेयचक्रवर्ती नश्चक्रवर्ती सदा भवेत्
केनडादिमसामन्तराज्यै स्तुल्याधिकारिता ।। ६६

सर्वेषा भारतीयाना योगक्षेमविधायिनी
एव समाप्य त लेख विरराम सुधीवरः ।। ३७

इति श्रीलोकमान्यचरिते द्वितीयलण्डनयात्रा, पारिसूसन्धि-
सभालेखश्चेति चतुर्दशस्सर्गः ।।

---

क्लेमेङ्को=Senator M. J. Clemenco.

सिन्हाप्रभुवरः=Lord Sinha.

कैनडादि···तुल्याधिकारः=Dominion status.

नागरत्व=Civilization.

इण्डिया कार्यदर्शी=Secretary of state for India.

न्यायस्य, शाशनाना, कार्यनिर्वहणस्य च शाखा = Indiciary, Legislative and executive wings.

## अथ पञ्चदश स्सर्गः ।

श्लो॥ काश्यां भारत धर्माख्य महामण्डल सन्निधौ
उपन्यास्यदय विज्ञो मतमुद्दिश्य हैन्दवम् ॥ १

हिन्दूमत महावृक्ष शाखाभूतान्यनेकश.
वैष्णवादि मतान्यत्र सन्ति भारतभूमिषु ॥ २

तेषां समैक्य क्रियतां महामण्डलसंस्थया
मतानामपि सर्वेषा वेदा मूलमिति स्थितिः ॥ ३

एकदैव समुत्पन्ना मनुजास्स्वमतैस्सह
मतानामपि सर्वेषा मूल हिन्दूमत मतम् ॥ ४

ऐक्यसम्पादनेनैषामभेद्य हैन्दव मतम्
पुत्रपौत्रादिसगत्या कुटुम्बीव महद्भवेत् ॥ ५

सर्वस्वातन्त्र्यशाखासु मतस्वातन्त्र्य मीप्सितम्
'धृ' धातो धारणार्थाद्धि धर्मो निष्पद्यते स्फुटम् ॥ ६

धारण बन्धन चेति तदर्थद्वयमीरितम्
मिलित्वाऽर्थद्वय धर्म तदेव मत मिष्यते ॥ ७

सौशील्यधर्मनिर्वाहि. भगवद्विषयानुगः
साधिको बन्धुभावो हि चेतनानां परस्परम् ॥ ८

श्लो॥ धर्म इत्यपरो ज्ञेय तत्सर्वं मतमिष्यते
समृद्ध भारत वर्षं वैदिके युगसत्तमे ॥ ९

एकजातितया सर्वे संघीभूय सुख स्थिता
स्मर्तव्यवैभवा जाता जातिस्सप्रति हैन्दवी ॥ १०

सघीभावो विनष्टोऽभूत् लब्धेयतेन दुर्गतिः
पुनरुद्धरणादस्य सर्वं सम्पद्यते शुभम् ॥ ११

कन्याकुमार्यां काश्मीरे काश्या कोल्हापुरेऽपि च
यत्र कुत्र स्थितावाऽपि दूरे वा यदिवान्तिके ॥ १२

भारतीया वय स्याम नान्य इत्यवधार्यताम्
भाषा वा यदिवा वेषा आचारा वा परस्परम् ॥ १३

यथायथ विभिद्यन्ता न भिन्नास्तावता वयम्
वदिक वाङमय सर्वं श्रीमद्रामायणादिकम् ॥ १४

एकाकारेण पूज्यन्ते तदैक्यस्य निदर्शनम्
एक जातीयताभावभावनाबलसम्पदा ॥ १५

अस्माक प्रतिपत्तिस्स्यात् खण्डखण्डान्तरेष्वपि
धर्मग्लानौ स भगवान् भारतेऽवतरिष्यति ॥ १६

इत्येव मतमेवंकमस्माक बोधयत्युत
मतभेदेऽपि सर्वेषा गम्यस्थानमनन्यवत् ॥ १७

अतस्सहनभावेन वर्तितव्य परस्परम्
इत्येव बोधयत्यद्धा मत न स्सर्वसम्मतम् ॥ १८

श्लो॥ श्रीशङ्कराद्यैराचार्यैं स्समँक्य मुपबोधितम्
अस्मन्मतस्य शत्रुत्वे वर्तेते द्वे यदोद्धतम् ॥ १९

एकः प्राकृतिक शास्त्र द्वितीय क्रैस्तव मतम्
वसुना जगदीशेन दर्शिता चेतनास्तित म् ॥ २०

सर्वप्र तेऽद्य जानन्ति पाश्चात्यपरिशोधका
क्रैस्तवा अद्य जानन्ति कर्म सिद्धान्तसत्यताम् ॥ २१

शरीराणा मनित्यत्व जीवाना नित्यसत्यताम्
योगाभ्यास विशेषण हृत्कोशस्याविकम्पनम् ॥ २२

दृष्ट्वा पाश्चात्यभिषजो विस्मय परम गता·
योगज्यौतिषवैद्यादिशास्त्राणा मृषिसत्तमै. ॥ २३

रचितानामेकदेशप्रत्यक्षत्वनिदर्शनै
पाश्चात्या अपि जानन्ति प्राज्ञा निष्पक्षपातिन· ॥ २४

त्रिसत्य भारतमतमिति सम्यग्विशोधनात्
राजनीतिर्मतमिति द्वितय नान्तरीयकम् ॥ २५

तदेतद्बोधनार्थाय पाठशालास्समन्तत.
एतन्महामण्डलेन स्थापनीया प्रयत्नत ॥ २६

अलसत्व मनास्था च सनातनमतादिषु
काले भाविनि नास्माक योगक्षेमाय कल्पते ॥ २७

एकदेशाभिमानश्च महानर्थाय कल्पते
मतान्तरेषु सहन सर्वत्र समदर्शिता ॥ २८

श्लो। भद्राणि सविधास्यन्ति कल्याणगुणसम्पद
अधस्तान्नश्च'णयो विद्यमानान् हिरण्मयान् ।। २९

आकरान् दर्शयन्त्यद्य पाश्च त्य परिशोधका
नाता लज्जाकर किञ्चिद्वुनिष्टत निबोधत ।। ३०

भारतीयैस्स्वय कार्यं प्रकृते परिशोधनम्
नावरा परदेश्येभ्य बुद्ध्या सूक्ष्मार्थदर्शनै ।। ३१

अस्पृश्यता समुद्दिश्य निजाशयमवेदयत्
लोकमान्यो दार्घदर्शी सवशास्त्रार्थसम्मतम् ।। ३२

अस्पृश्यजातिर्न क्वापि शास्त्रेषु परिदृश्यते
दृष्टौ भगवतस्सर्वे सोदरा एव तत्त्वत. ।। ३३

उत्सवेषु विवाहेषु यात्रासु च महापदि
स्पृश्यन्ते सर्वजातीया स्सर्वैरेव निराकुलम् ।। ३४

माहम्मदा क्रैस्तवाश्च मतान्तरगता अपि
स्पृश्यन्ते स्वमतस्थाना स्पर्शदोष कथ भवेत् ।। ३५

स्वराज्ये समनुप्राप्ते स्पर्शदोषनिवारणम्
सङ्घसस्कारकार्येषु प्रथमस्थान मर्हति ।। ३६

प्रतिमा गणनाथस्य गणपत्युत्सवान्तरे
धृत्वा मृच्छकटे कश्चिदस्पृश्यस्सहितो मया ।। ३७

उत्सवस्थानमगमन्नाहं विप्रै र्बहिष्कृत:
प्रविशन्ति ममागार सत्क्रियन्ते च ते मया ।। ३८

श्लो॥ अचिरेणैव कालेन नश्यत्यस्पृश्यता ध्रुवम्
सर्वजातिषु सोदर्य मीप्सित परमेशतु ॥ ३९

तस्मात्सोदरताबुद्धि स्सर्वाभ्युदयकारिणी
बहूद्यमव्यापृतत्वा न्नैतत्कर्तु मशक्नुवम् ॥ ४०

स्वराज्यसौधसोपान मस्पृश्यत्वनिवारणम्
इति व्याहृत्य स सुधी स्वाशय विरराम हा ॥ ४१

सङ्घसंस्कारमुद्दिश्य 'बेल्ला' नगरसत्तमे
उपन्यास्थदसौ श्रीमान् महार्थं मतिसङ्ग्रहम् ॥ ४२

प्रजाप्रभुत्वे भिन्नाना माशयाना प्रकाशनम्
सख्याबहुत्वे विजयस्सर्वमेतन्ममेप्सितम् ॥ ४३

हिन्दूमस्मदीयाना मैक्ये सपदि सम्भृते
ब्राह्मणानां तदन्येषामैक्य नाम न दुष्करम् ॥ ४४

लक्ष्मीस्थानानि वाणिज्य कृषिकर्मपरिक्षमा
बाह्मणेतरहस्तेषु वर्तिष्यन्ते विशङ्कटम् ॥ ४५

तास्तान् सम्मोनयिष्यन्ति ब्राह्मणा वृत्तिकर्शिता
श्ववृत्ते रूपरोधेन ब्राह्मणेषु पृथग्विधा ४६

जाता दुर्ललिता भावा परेषा परिपालने
स्वराज्ये समनुप्राप्ते न ते स्थास्यन्ति सुस्थिरम् ॥ ४७

मतादिषु दुरावेश क्रमशो हि विनङ्क्ष्यति
अत्यल्पान् सशयान् हित्वा सर्वैरेकाशयोर्जितै ॥ ४८

मातृदेशसमुद्धारे ध्रियता यत्नगौरवम्
सशयी चाश्रद्धधान स्वयमेव विनश्यति ।। ४९

दास्यशृङ्खलया बद्धा मातर परिपश्यत
तस्या प्रीति समुत्पाद्य सुखितास्स्याम भूतले ।। ५०

लालनै रिष्टदानैश्च प्रतिप्रत्त्या च पोषणै.
मातैव पुत्रसन्तत्यास्सौभ्रात्र वर्धयिष्यति ।। ५१

इति श्रीलोकमान्यचरिते हिन्दुमतप्रख्यापन,
सङ्घसस्कारोपबृहण चेति पञ्चदशस्सर्ग ।।

---

वसु जगदीश:=Jagadesa chandra Bose.
आकर =A mine.

## अथ षोडश स्सर्गः।

श्लो॥ नगर्या ममरावत्या सङ्गते बत्सभाङ्गणे
विवृत्य गीतासाराशं बभाण वदतां वर ॥ १

ससारार्णवमग्नानां मुक्तिरत्यन्तदुर्लभा
शास्त्रोक्तविधिना वृत्ति र्दुर्घटाऽस्मिन् कलौ युगे ॥ २

एवं मात्रा च पित्रा च वृद्धै प्राज्ञै र्महात्मभि
उपदिष्टोऽस्मि कौमारे तदाद्यहमतन्द्रित. ॥ ३

वेदान्तसारसर्वस्व गीतां पठितु मुत्सुक
गीता पठन्ति बहव स्वीयमाशयमाश्रिता ॥ ४

तेषा तु ज्ञायते किञ्चिद्गीताया हृदयान्तरम्
गीताया हृदय ज्ञातुमपठ शुद्धमानस ॥ ५

ज्ञान भक्तिस्तथा योग कर्म चेति चतुष्टयी
दृश्यते बहु गीतासु निर्भरः कुत्र वा हरे ॥ ६

इति जिज्ञासितव्येऽस्मिन् निश्चयोऽय मयाकृत
कस्मिन् काले च सन्दर्भे किंनिमित्तमिय कृति ॥ ७

प्रादुर्भूतेति जिज्ञासा पठने मे पुरस्कृता
ज्ञानिना वाऽपि भक्तेन योगिना वाऽप्यनारतम् ॥ ८

श्लो।। कर्मयोग स्त्वनुष्टेयः कामसकल्पवर्जिता
एतस्य कर्मयोगस्य भक्तिज्ञानादिसंचयः ।। ९

सोपानभूत इत्येव गीताया पिण्डिताशय·
निष्पाक्षिक विमर्शेन कुशलेनावबुध्यते ।। १०

युद्धकर्मविरक्ताय सन्यासाश्रमकाक्षिणे
पृथापुत्राय भगवत् श्रीकृष्णपरमात्मना ।। ११

गीतोपदिष्ट वेदान्तसारसर्वस्वसङ्ग्रह
जनकादीनुदाहृत्य कर्मयोगो बहूकृत ।। १२

विनष्टमोहजालेन गीतासारार्थवेदिना
अकारि जन्य पार्थेन सन्यासो नाभ्यनन्द्यत ।। १३

इत्यादियुक्तिप्रामाण्यबलेनाहृ व्यतर्कयम्
निष्कामकर्मकलना गीतया बोधिता ध्रुवम् ।। १४

त्रय पदार्थ दृश्यन्ते जीव प्रकृति रीश्वर
जीवेशयो विभागान्ते सडकल्पात्परमात्मन ।। १५

प्रपञ्चोऽय समुत्पन्नस्त जीव कथमुत्सृजेत्
अह ब्रह्माऽस्मि मुक्तोऽस्मि नान्यदस्तीति भावयन् ।। १६

यदि जीव परिहरेत्प्रपञ्चमिम मन्तत
जातेन वाऽप्यजातेन तेन सृष्टे फल नहि ।। १७

कर्तव्य रहितेनाऽपि क्रियते कर्मविस्तर
यावदुच्छ्वसिति प्राणी तावत्कर्मणि सज्जति ।। १८

श्लो॥ 'न मे पार्थास्ति कर्तव्य', 'वर्त एव च कर्मणि'
सेय भगवतो वाणी प्रामाणिकशिरोमणि ॥ १९

जीवेशयो रैक्ययोग प्रपञ्चैक्येन युज्यताम्
यदि नैवप्रपूर्णत्व मेकहानाश्च सिध्यति ॥ २०

ईशजीवप्रपञ्चाना त्रयाणा मेकभाविता
मुक्तिरित्यवबुद्ध्याह वर्त एव च कर्मणि ॥ २१

निष्कामकर्म ज्ञान च तौल्येन प्रतिपद्यताम्
इति गीतारहस्यार्थ व्यवृणोत्परमाद्भुतम् ॥ २२

कर्मयोग समुद्दिश्य 'नासिका' नगरोत्तमे
उपन्यास्यदसौ श्रीमान् ब्राह्मणाना सभामुखे ॥ २३

मन्येऽहमाशिषो दीप्ता सम्मानमिम मर्पित
कर्मयोगाचार्य इति बिरुदस्य न मेऽर्हता ॥ २४

एक एवास्य जनको वैदेहोऽर्हति नैतर
उपदिष्ट कर्मयोग हरिणाऽऽसीद्विवस्वते ॥ २५

तेनासौ वेद्यते सर्वै कर्मयोग पुरातन
द्वापरे पुनरेवाय मुपदिष्ट किरीटिने ॥ २६

गीता नाम महाशास्त्र येनेय भारती मही
कीर्ते शिखर मारूडा खण्डखण्डान्तरेष्वपि ॥ २७

यदा त्यक्त कर्मयोग तदादि भरतावनौ
भाग्यभोग्यादि सम्पत्ति स्स्वातन्त्र्य मकुतोभयम् ॥ २८

श्लो।। दूरदूरमभूत्सर्वं मभूम पशुभिस्समाः
निष्कामकर्मयोगो न स्स्वराज्यपदलब्धये ।। २९

साधन शास्त्रगदित निबोधत महाद्विजा॰
स्व च राज्य च न प्राञ्च व्यजानन् दूरदर्शिन ।। ३०

स्व नाम जन्मसत्ता स्यात् राज्य तत्राधिकारिता
तया विना न लभ्यैत स्वाराज्यमिति निश्चितम् ।। ३१

स्वराज्य मिहसम्बन्धि स्वाराज्य पारलौकिकम्
निष्कामकर्मयोगेन स्वराज्य मनुभूयताम् ।। ३२

ततस्स्वाराज्यसम्प्राप्ति करामलकता मियात्
लभ्यमेवोभय सर्वै रकामयुतचेतनै ।। ३३

स्वराज्य हस्तग प्राचा मतो मोक्षोपदेशिन
दृश्यन्ते बहवो ग्रन्थाः प्रणीता श्शान्तमानसैः ।। ३४

अस्माक न तथाऽद्यास्ते स्वराज्य परहस्तगम्
अधिकृष्य चतुर्वर्गान् चतुरर्थान् विशेषत. ।। ३५

प्रावर्तत मत भूम्ना न मुनीन् वनगोचरान्
गर्भस्थजीवजन्तूना योवा वृत्ति मकल्पयत् ।। ३६

सएव भगवान् वृत्ति कल्पयिष्याति सांप्रतम्
एव नु मन्वते केचिदलसा बुधमानिनः ।। ३७

स्वमात्मान समुद्दिश्य स्वेनैव यदि यत्यते
तत स्साह्य स भगवान् करिष्यति यथायथम् ।। ३८

श्लो। काश्चिच्छ्लोकान् प्रबल्पन्ति प्राय कुकविकल्पितान्
नकिञ्चिदपि कुर्वाणा वृथायुः क्षपयन्ति ते ॥ ३९

कविकल्पितपद्याना वेदवन्न प्रमाणता
सर्वे स्सर्वप्रयत्नेन स्वधर्म प्रतिपद्यताम् ॥ ४०

अफल कर्म नास्त्येव दूरे वा यदिवान्तिके
अलसत्व दंष्टिकता वेदान्ताभासभाषणम् ॥ ४१

कापूरुषाणा मज्ञत्वलक्षणानि न तैः फलम्
आरोपिताना पूर्वैर्नस्तरूणां फलसन्ततिः ॥ ४२

यथाऽनुभूयतेऽस्माभिस्तथैवापरजन्मनाम्
फलभोगाय वृक्षाणा मारोप कार्य एव न । ४३

स्वधर्मातिक्रमाद्भाविसन्तति र्न शपिष्यति
कर्मचक्र भ्रमत्येव परमेशनियन्त्रितम् ॥ ४४

ब्रह्मणो लिपितोषेण विदेशपरिपालनम्
श्रेयासि नो निहन्तीति भ्रमोऽय परिधूयताम् ॥ ४५

साधु वा यदि वाऽसाधु शुभ वा यदि वाऽशुभम्
स्ववश स्वात्मना लभ्य भगवास्तु निमित्तकम् ॥ ४६

यो रुणद्धि प्रजासत्ता स राजा नरक व्रजेत्
धर्मेण य प्रजाः पाति स राजा विष्णुसन्निभ ॥ ४७

अधर्मी निंद्यते राजा लोकयोरुभयोरपि
अवलिप्तस्य नृपते कार्याकार्यमजानतः ॥ ४८

श्लो।। शासनानि न पूज्यानि त्याज्यान्येव मनीषिभि
आरादुपनत सौख्यमधर्म्यं लोकगर्हितम् ।। ४६

त्यक्त्वा सर्वात्मना धर्मे कष्टेऽपि रमते सुधी
सर्वससारचारित्रे नैना भारतजीविका ।। ५०

स्वराज्ये समनुप्राप्ते सर्वं सम्पद्यते शुभम्
विद्याविधान भैपज्य पर्याप्तो धान्यसङ्ग्रह ।। ५१

अहोबत ! पराधीना धिक्धिक् भारतजीवितम्
सन्ति पाश्चात्यदेशेऽपि वेदान्तपरिनिष्ठिता ।। ५२

स्वातन्त्र्यरहितानस्मा न्नाद्रियन्ते पशूनिव
गज पलायन मिथ्येत्याह कश्चिद्यति किल ।। ५३

तद्वन्मिथ्यात्वमेवास्तु स्वधर्मं प्रतिपद्यताम्
अह ब्रह्मेति ब्रह्मत्व भावयन् ब्रह्मतामियात् ।। ५४

तद्वत्स्वराज्य सतत भावयन् तत्प्रपद्यते
मिथ्येति मन्यमानोऽपि नच्छिनत्त्यसिना शिर ।। ५५

गमनागमननिद्रादि करोत्येव निजेच्छया
तथा स्वधर्म इत्येव स्वराज्येऽपि प्रवर्तताम् ।। ५६

वितण्डजल्पशकाद्यै वृथाऽऽयु. क्षपण भवेत्
उत्तिष्टत स्वराज्याय जाग्रत प्रतिबोधत ।। ५७

सर्वं परवश दु ख सर्वमात्मवश सुखम्
एवमादिश्य स सुधी निश्चक्राम सभाङ्गणात् ।। ५८

इति श्रीलोकमान्यचरिते गीताचोदितकर्मयोगविवरण
नाम षोडशस्सर्ग ।।

---

# अथ सप्तदश स्सर्गः ।

श्लो॥ न नीतिर्नापि धर्मम्स्यादार्जव कुटिलात्मसु
इति ब्रूते लोकमान्य. नयागमविदां वर ॥ १

कौटिल्यमपि निग्राह्य सत्येन ऋजुना पथा
राजनीतावपीत्याह महात्मा गान्धि रन्तत ॥ २

अक्रोधेन जयेत्क्रोधमिति बुद्धस्य भाषितम्
प्रमाणीकुरुते सम्यक् सहनैकपरायण ॥ ३

ये यथा मा प्रपद्यन्ते तास्तथैव भजाम्यहम्
इतीमा भगवत्सूक्ति प्रमाणीकुरुतेऽपरः ॥ ४

उभावपि महाभागौ लोककल्याणकामनौ
जितात्मानौ जितक्रोधौ सर्वत्र समदर्शिनौ ॥ ५

जगत्प्रह्लादनौ धीरौ जगदेककुटुम्बिनौ
परार्थमनुभूतार्तिघोरकष्टपरम्परौ ॥ ६

स्थितप्रज्ञौ त्यागधनौ मूर्तौ शमदमाविव
लोकक्षेमकृतोद्योगौ नरनारायणाविव ॥ ७

भारतीमानससरोराजहंसावुभावपि
तस्थुत्वौ महामेरुमन्दरोर्वीधराविव ॥ ८

श्लो।। रत्नाकरमहाब्धीव गम्भीराशयभासुरौ
भारताकाशविचरत्सूर्याचन्द्रमसावुभौ ।। ९

समैकलक्ष्यससिद्धि सन्दानितनिजाशयौ
पर्यायेण धुरं गुर्वीमूहतुर्भारतावनेः ।। १०

इक्षुक्षीरादिमाधुर्यं तारतम्यमिवानयो
सूक्ष्मो रुचिविभेदोऽस्ति सरस्वत्यऽपि दुर्बुध ।। ११

आदर्शचरितै र्भव्यै पुनाते भारतीमिमाम्
भृगुरामस्य तत्तेजो रघुराममिवान्ततः ।। १२

लोकमान्यस्य तत्तेजो महात्मानमपद्यत
उपाधिभेदमात्रेण तेजसो न विभिन्नता ।। १३

तस्मादस्थानसरम्भ स्तदान्तर्यपरीक्षणम्
जित केनापि महसा प्राच्यामुद्भूय भास्वता ।। ३४

इति श्रीलोकमान्यमहात्मनो रान्तर्यपरीक्षण
नाम सप्तदशस्सर्ग ।।



# अथ अष्टादश स्सर्गः।

श्लो। षट्षष्टिमितवर्षेषु गतेषु सततोद्यमैः
मूर्ति श्रलोकमान्यस्य क्षीणक्षीणा बभूव हा ॥ १

अन्तरतु समासाद्य प्रविवेश महान् गद
आत्ममित्रस्य सर्दारनाम्न प्रार्थनया भृशम् ॥ २

चिकित्सार्थ लोकमान्य मुम्बापुरवर ययौ
तस्यैव सदने वास चक्रे बन्धुपरीवृत ॥ ३

भिषजा सिद्धहस्ताना चिकित्साऽपि वृथाऽभवत्
रोगस्तु स्ववश निन्ये तनू ता पाञ्चभौतिकीम् ॥ ४

न शशाक प्रज्वलन्ती स्प्रष्टु ज्ञानमयी तनूम
भित्वा स हृदयग्रन्थीन् विच्छिन्नाखिलसशय ॥ ५

सर्वकर्माणि सन्यस्य ज्वलिते ज्ञानतेजसि
आत्मान मात्मना पश्यन् जीवन्मुक्तिदशा गत ॥ ६

प्रतीक्षमाणस्समय प्रियबन्धुमिवात्मन
सर्वकर्तव्यकार्याणि समाप्य कृतिना वर ॥ ७

भूमानन्दमयस्तस्थौ निम्तरङ्ग इवाम्बुधि
चरमा ता दशा तस्य श्रुत्वा सर्वाऽपि भारती ॥ ८

श्लो।। निपपातान्धतमसे दु खसविग्नमानसा
लालालजपतिर्गान्धिरन्ये देशीयनायका. ।। ९

आजग्मुर्मुम्बयि पुरी हुटाहुटिगतिस्फुरा
अस्तयन्तमिवादित्म मम्बुहीनमिवाम्पुधिम् ।। १०

विभिन्नमिव हेमाद्रि प्रसुप्तमिव दिग्गज
शयानमन्त्यशथ्याया ददृशुस्त समा· प्रजा ।। ११

पार्श्वे तिष्टन्तमालोक्य गान्धि तु परमादरात्
प्रोवाच लोकमान्यस्त किस्विन्मा द्रष्टुमागत ।। १२

न किञ्चित्प्रत्युवाचासौ शोकनिर्भिन्नचेतन.
शिरो विथाय तद्गर्भे स्रवद्बाष्पाम्बुलोचन ।। १३

मुमोह समय कञ्चिन्महात्मा व्याकुलेन्द्रिय
चरमा भारती तस्य श्रोतुकामान् विलोकयन् ।। १४

इदमूचे लोकमान्यस्तस्यैव सदृश वच.
"यदा यदा हि धर्मस्य ग्लानि रि"त्यकुतोभयाम् ।। १५

गीतावाणीं जगादोच्चै श्रीकृष्णपरमात्मन
समानन्तरमेवास्य तेजो गान्धिमपद्यत ।। १६

अस्तयतस्सहस्राशोस्तेजोबह्निमिवात्मन·
ब्रह्मरन्ध्र हठाद् भित्वा प्राणवायुरनुत्तम· ।। १७

निश्चक्राम महायोगिवर्यस्य तिलकस्य हा !
रज.परस्मिन्महसि सच्चिदानन्दरूपिणि ।। १८

पुनरावृत्तिरहिते तेजस्तत्प्रव्यलीयत
लोकमान्यस्य निर्याण स्वय दृष्ट्वा महाजन ॥ १९

रुरोद भृशमुद्विग्न· शोकोपहतचेतन·
हाहाकारो महान् जातस्ता पुरी प्रतिनादयन् ॥ २०

सहजा धीरता त्यक्त्वा महाभारतनायका
विलेपुस्सस्वर दीना मातृहीना इवार्भका ॥ २१

विद्युद्वेगेन सा वार्ता व्यानशे विदिशो दिश
सर्वाऽपि भारती गाढ निमग्ना शोकसागरे ॥ २२

हठादन्तर्हितानन्दा दीनविक्लबदर्शना
सर्वत्र सङ्कुलाक्रन्दा परितप्तार्तचेतना ॥ २३

मूर्छिता विह्वलोद्विग्ना, न कश्चित्किञ्चिदब्रवीत्
सर्ववृत्तिप्रतिष्ठम्भस्सर्वत्र समजायत ॥ २४

आसन्विचेष्टास्सकला प्रजाश्चित्रार्पिता इव
व्यलपन् सुभृश दीनास्सर्वे सर्वत्र सङ्गता ॥ २५

अस्तङ्गतस्सहस्राशुरशूष्यत् क्षीरवारिधि
अभिद्यत महामेरुर्भूतसारस्तिरोहित· ॥ २६

वेला भित्वा जगदिद प्लावयामास सर्वत
निरस्तसर्वसभेद करुणारससागरः ॥ २७

आदेष्टाचोपदेष्टा न सचिवो गुररञ्चित.
आप्तस्सखा प्रियो बन्धु स्स्वराज्यरथसारथि ॥ २८

श्लो॥ अपरावृत्तये सर्वाननापृच्छ्य क्व वा गत
भारत्या दुर्वह भार कोनामाद्य धरिष्यति ॥ २९

सिंहस्वप्नायिता यस्य मूर्तिर्भारतवैरिणां
सिंहसहननस्सोय त्यक्त्वा न क्व नु वा गत ॥ ३०

इत्यार्तनादे सभूय प्रतिध्वनति सर्वत
गान्धिप्रभृतयो धीरा ऊहुस्तस्य कलेबरम् ॥ ३१

रुद्रभूमिगतास्तस्य सर्वे चक्रु प्रदक्षिणम्
कर्पूरखण्डनिचयैश्चान्दनै. काष्टसञ्चयै ॥ ३२

अन्त्येष्टिं विधिवत्कृत्वा प्रादहस्तत्कलेबरम्
पुत्रा पुरुषसिंहस्य लोकमान्यस्य दु खिता ॥ ३३

लालालजपतिस्तत्र विललाप सगद्गदम्
तस्य तेन विलापेन दुद्रुवु कठिनाश्शिलाः ॥ ३४

व्यवाशीर्यन्त वज्राणि सर्वमासीद्विचेतनम्
सर्वे भावा रसास्सर्वे करुणारससागरे ॥ ३५

नामरूपे विहायास्तगता निरवशेषत
अभूतपूर्वसङ्क्षोभः जगत्यां समजृम्भत ॥ ३६

नापाययत्सुत माता नौषध रोग्यसेवत
अनिर्वाप्य पुत्रशोको भारत्यास्समजायत ॥ ३७

पुरा शान्तनवे भीष्मे बालगङ्गाधरेऽधुना
स्मृतिर्ब्रह्ममयी जाता मुमूर्षाविति सजगु ॥ ३८

श्लो॥ दशमेऽह्नि जगद्बन्धोर्विधिवत्तस्य भारता
जलाशयेषु सर्वत्र ददुर्धर्मोदकाञ्जलीन् ॥ ३९

जगदेककुटुम्बस्य बालगङ्गाधरस्य वा
गाङ्गेयस्यापि या सैषा धर्म्या धर्मोदकक्रिया ॥ ४०

स्वराज्यसत्रयागार्थान् कृत्वा सर्वान् फलोन्मुखान्
मन्दाकिन्यामवभृथस्नान कर्तु जगाम हा ॥ ४१

जित केनापि महसा बालगङ्गाधरात्मना
भारतीभाग्यकन्देन भद्रेण जितकाशिना ॥ ४२

इति श्रीलोकमान्यस्य निर्याण नाम
अष्टादश स्सर्ग ॥

---

श्लो॥ यद्वीक्षण भक्तमातृतनूजजातेः
वज्रोपलस्थगितवर्मविलास आसीत् ।
यद्वाग्झरी स्वजनदास्यमलापनोदि-
मन्दाकिनी समभवत्स कृती बभासे ॥ ५

आशसनीयचरितामृतवार्धिवेला-
डोलाविहाररसिकस्य मनोज्ञमूर्ते
गङ्गाधरस्य सुगुणान् दिवि तारकाश्च
कश्शक्नुयाद्गणयितु धरणीकणाश्च ॥ ६

विनयनिचुम्बिताना माधुरीवाहिनीना
विमलसरसभावस्फूर्तिविस्फारितानाम् ।
तिलकबुधहिमाशो भारतीना विलासै
जगदिदमतिबुद्ध विस्मित सस्मित च ॥ ७

प्राच्यप्रपञ्चगिरिकम्दरतो निशम्य
गङ्गाधराह्वयमृगाधिपगर्जितानि ।
कर्तव्यमूढमतिभि सुगृहीतशकै
पाश्चात्यपालकवरै क्वचिदेव लिल्ये ॥ ८

चेष्टा यस्य सुधारसाञ्चितसरित्कल्लोलमालायिता
वाचा यस्य महोत्पलान्तरलसन्मारन्दधारायिता ।
चेतो यस्य तुषारचन्दनरसश्रीखण्डलेपायित
स श्रीमान् तिलको व्यराजत जगत्कल्याणहेतूदय ॥ ९

श्लो।। षडङ्गयुक्ता त्रितयी श्रुतीना
सप्ताङ्गयुक्ता नृपनीतिविद्या ।
अष्टाङ्गयुक्ताऽपि च योगविद्या
तस्मिन् समेता परभागमीयु ।। १०

सिहेनापि कचाकचि प्रहरण कर्तु प्रतिद्वद्विना
पातु वा विषमुल्बण लयशिखिज्वालामु वा लघितु ।
दोर्भ्यां वारिनिधि तरीतुमपि वा मृत्योश्च दष्ट्रावलि
स्थेम्नोत्पाटयितु च भारतकृते नासौ परावर्तत ।। ११

येनैय भरतावनिस्समभवद्वीराधिवीरप्रसू
येनैमा भरतप्रजास्समभवन् भाग्यात्सनाथाश्चिरात् ।
येनैकेन सरस्वती भगवती स्वार्थ समापद्यत
श्रीमानैश्वरनेत्रसस्ससतिलको रेजे विवर्तोदयः ।। १२

त्यक्त्वा वा विभवाननन्यसुलभान् लोकतिगश्रीजुष
स्थित्वा वा नरकोपमे चिरतर कारागृहाभ्यन्तरे ।
गत्वा वा विविधाननारतगतैर्देशान्प्रचारादृते
भारत्य.. परदास्यमोचनकृते कोऽसा वहो ! निर्भर ।। १३

कि बन्धन प्रियतर हृदयस्य गाढ
दूतो निसृष्टपरमार्थरसोनु वाऽपि ।
आत्माऽपि वा पुरुषलिङ्गधरस्स मान्य.
देव्या पर भरतखण्डवसुन्धराया ।। १४

श्लो।। आङ्ग्लेयराजन्यवशोऽभविष्य-
दसौ यदि श्रीभरतेन्दिराया. ।
सद्योऽभविष्यद्युवराज एव
कथ नु तादृग्भविता स्वगृधनु ।। १५

स्वाभाविकी समतिरिच्य परात्मविद्या-
मौत्सर्गिकी विरुरुचे नृपनीतिविद्या ।
निष्कामकर्मकलया कृतसधिबन्धा
तस्मिन् द्वयी समरसा परभागमाप ।। १६

सेहे स कष्टानि निरन्तराणि
पर न सेहे निजदास्यवृत्तिम् ।
जहौ समीहा स्वकुटुम्बमात्रे
जहौ समीहा न जगत्कुटुम्बे ।। १७

प्राक्पश्चिमोदञ्चितवाङमयाब्धि-
प्रकामलीलाविहृतिक्षणाऽपि ।
नैवाञ्जसा तस्य वरा मनीषा
जेगीयतेऽसौ प्रथितात्मसत्त्व ।। १८

यस्योपदेशवचनैर्भरतावनीय
प्रक्षालितेव बहुधा परिशोधितेव ।
उन्मीलितेव बहिरन्तरलङ्कृतेव
काञ्चित्पुपोष सुषमा पुरुषार्थदात्रीम् ।। १९

श्लो॥ वाणीदेव्या भव्यलीलागृह वा
किं वा तस्या दर्पणं रत्ननद्धम् ।
किं वा तस्या स्सारनिक्षेपपेटी
श्रीमान्निधे बालगङ्गाधरोऽसौ ॥ १०

यतीन् पुपूज प्रणिपत्य साङ्गं
काषायवासोधृतिमात्रतोऽसौ ।
कदाचिदेतेषु विरागितायाः
कलाऽपि सभाव्यतरेति मत्वा ॥ ११

ओजस्तेजोवर्चसा जन्मभूमि
भव्योदञ्चत्सत्त्वसर्वाभिसारः ।
धैर्यस्थैर्यश्रीभिरुद्वेल्लितात्मा
सोऽयं रेजे भारतीसुप्रभातम् ॥ १२

सौजन्यसौहार्दरसज्ञताना-
मेकाश्रयोन्मीलनसभृतश्री ।
यस्यान्तरात्मा व्यलसत् त्रिवेणी
कोऽप्येष गङ्गाधरसूरिवर्य ॥ १३

चित्तारविन्दमकरन्दरसैकधारा
वाणीं निपीय नच तृप्यति यस्य लोक ।
सर्वौघ एष भरतावनिजन्मभाजां
पाकोन्मुखस्य सुकृतस्य पुराकृतस्य ॥ १४

श्लो।। भर्तुर्मुखाम्बुरुहपञ्जरबद्धवृत्तिः
स्वेच्छाविहारविधुरा परमेष्टिपत्नी ।
गङ्गाधरस्य वदने कृतसन्निवेशा
सर्वत्र वीरविहृति नितरा वितेने ।। २५

पाश्चात्यवाणीललितप्रबन्ध-
रसानुभूत्या क्वचिदास मुग्ध. ।
प्राच्यप्रपञ्चोदितवाङ्मयश्री
रसानुभूत्या क्वचिदास लुब्धः ।। २६

असौ समस्याश्रुतिसञ्चयाना
काण्डद्वयीसारनिवेदिकानाम् ।
विज्ञानराशे परिणामि रूप
चारित्रसीमा तिलको बभासे ।। २७

स्वाभाविकी बोधकला च वाणी
सुशिक्षिता शास्त्रचये च निष्ठा ।
कार्यानुसारि प्रतिभानवत्त्व
तस्मिन्नपुष्यन् परभाग्यलक्ष्मीम् ।। २८

नीतौ श्रुतौ श्रुतिशिखासु समप्रसारा
गङ्गामिव त्रिपथगा प्रतिभाममेयाम् ।
गङ्गाधरस्य निगमागमपारगस्य
कोव ऽनुकर्तुमभवत्कलयाऽपि शक्त ।। २९

श्लो.। स्वराज्यसबन्धविनाकृतोऽस्य
स्वप्नप्रसङ्गो न कदाऽप्यदर्शि ।
मनोरथा वा सकलास्समेता
पान्थास्समासन् निजराज्यमार्गे ॥ ४०

भाषावाङ्मयशास्त्रसस्कृतिकृतस्सन्तु प्रबुद्धाशया
ये केचिद्विबुधा न तैरुपहित स्सर्वोदयै भारते ।
नानारूपमहार्थसस्कृतिविधास्सम्पाद्य सर्वोदिता
चक्रे भारतमण्डली स कृतिनाराडेकएवाद्भुतम् ॥ ४१

शीलस्वरूपमिद मीदृगिति प्रबोद्धु
लोकेऽपि शास्त्रसरणावपि नास्ति मार्गः ।
गङ्गाधरस्य चरितामृतशोधनेन
विज्ञायते स्फुटतया सकलप्रजौघैः ॥ ४२

प्रज्ञामूलविभासो, भूयानुत्साहकल्पभूरुह
प्रभुतासपत्फलसुमभरितस्तिलकस्य सर्वथा रेजे ॥ ४३

अतिदुरवगाहनीति, ह्रदमवतर्तु समप्रजाराजे
विपुल सुगम तीर्थ चक्रे नयवेदिसार्वभौमोऽसौ ॥ ४४

साहित्यामृतजलधे, रुद्यत्तारङ्गमालिकालोला.
पावनमञ्जुलहेला स्तस्याराजाराजन्त वाग्वधूलीला. ॥ ४५

विज्ञानकुञ्जगुञ्ज, न्मधुरोपन्यासवाक्प्रबन्धानाम्
आचार्यक बभासे, सर्वप्रतिपत्तिभाजन तस्य ॥ ४६

श्लो॥ सुरभिक्षीरविकृत्या, नवनीतेनास्य निर्ममे हृदयम्
देवीगिरा, न धाता, नोचेत्कथमीदृगञ्चितो म्रदिमा ॥ ४७

सन्यासिनो विरक्ता, स्सन्त्येव सर्वतो जगति
निष्कामकर्मयोगी, नासीदेकोऽपि तिलकवद्गण्य ॥ ४८

प्रशमाञ्चितसत्सभास्वसौ
मदमातङ्गगतिर्व्यसर्पत ।
विमतावृतसत्सभाङ्गणे
वरपञ्चास्य इवाभ्यलघत ॥ ४९

अये मूर्ता नीति किमु सुगुणवल्ली कुसुमिता
समस्तो विद्यानां किमु भवति सारो रसमय. ।
किमेभिस्तर्कैस्स्याद् व्यलसदवतीर्णो भुवमसौ
कलाशस्सारज्ञ भरतजननीभाग्यविभवात् ॥ ५०

दान्तो दयालुरनघ प्रसमीक्ष्यकारी
विद्याविवेकविनयादिभिरूर्जितात्मा ।
सत्त्वश्रिया सुरभितान्तरवृत्तिभव्य.
गङ्गाधरो विरुरुचे त्रिशुचि प्रवेक ॥ ५१

नयनिगमशिखालीसारवित्सार्वभौमः
व्यतिकरितदिगन्त श्वेतमानै र्यशोभि ।
असममहिमसार मङ्गलारामवाटी
व्यलसदमितसत्त्वश्रीभरो लोकमान्यः ॥ ५२

श्लो।। नाक्षत्रमण्डलमहत्तरमर्मभेद-
विद्याविशेषसमुपात्तयशोविभूते ।
तस्यात्मशत्रुपरिकल्पितमण्डलाना
मर्मप्रभेदनविधिर्नहि नाम किञ्चित् ।। ५३

क्षात्र तेजो भार्गवे हिस्रमासीत्
ब्राह्म वाऽपि क्रोधरूक्ष बभूव ।
तत्तद्दोषत्यागनिर्धूतकुत्स
तेजोयुग्म लोकमान्ये विरेजे ।। ५४

त्रिशत्कोटिजनौघसभृतपदा नाव स्वराज्याभिधा
एको नाविकतामुपेत्य बलवज्जग्राह य. क्षेपणीम् ।
आद्या नाविकता हरेर्मनुकृते मत्स्यावतारश्रिय.
भूयः स्मारयति म दिव्यविभव श्रीबालगङ्गाधर ।। ५५

कामन्दकादिमुनिकल्पितनीतिविद्या-
मूलस्वरूपविधिरेव सुरूढमूल ।
हिसाविधानपरिहारवशादनेन
सस्कारमाप्य जगदद्भुतमावितेने ।। ५६

कलानिधिख्यातिमहो! कलाभि
स षोडशाशाभिरुपैति चन्द्र ।
सख्याव्यतीतार्थकलाविराज
श्लाघामहे केन पदेन हीमम् ।। ५७

श्लो।। भरतावनि कीर्तिवल्लिका
सरसा येन सुपुष्पसभृता ।
निजगधभरेण मध्यमा
जगतीं वासयति प्रसर्पिणा ।। ५८

केतकीकुसुमकेसरपाण्डु-
श्रीमुषा निजयशोविभवेन ।
सर्वदिग्वरवधूपृथुगण्डान्
पर्यलिम्पदयमिद्धचरित्र ।। ५९

भेत्तु वान्तगाढमन्ध तमिस्र
सस्कर्तु वा भारतीं जातिमारात् ।
आधातु वा तेज ओजश्च वीर्यं
एको जज्ञे बालगङ्गाधरोऽसौ ।। ६०

अर्धाङ्गलक्ष्मीपरलोकवार्ता
श्रुत्वाऽपि कारागृहमध्यवर्ती ।
न विव्यथे नापि चचाल धीर.
चक्रेऽश्रुभिस्त निवापमात्रम् ।। ६१

न कश्चिदासीत्परिसान्त्वनाय
गङ्गाधरस्यापदुपद्रुतस्य ।
आत्मैव गीतामृतभावितोऽस्य
दु  वेग शमयाचकार ।। ६२

श्लो।। स्वराज्यनामामृतमन्त्रमौलेः
त्रिवर्णकस्य प्रथितात्मशक्ते॰ ।
ऋषि. प्रणेता तिलको महीयान्
य नित्यमावर्तयति प्रजालिः ।। ६३

प्रज्ञासिरा यस्य कपालमूले
कीदृक्प्रसारेत्यवगन्तुकामः ।
प्रावर्तताङ्ग्लेयभिषक्समाजः
कोऽप्येष वागीशपरावतारः ।। ६४

सनातनै धर्मरहोऽनभिज्ञै
पाश्चात्यभावोपहितैश्च नव्यै ।
दास्यप्रदैराङ्गलविभूसमैश्च
सम स युद्ध चकमे विधातुम् ।। ६५

चैतन्यधारां भरतप्रजाना-
मन्तर्हिता माङ्ग्लविभुत्वधाट्या ।
स्वपत्रिकालेखपरम्पराभि
रुज्जीवयन् निस्तुल मुज्जजृभे ।। ६६

जातौ च तत्ससदि भारताना
ओजश्च तेजो द्युतिमाङ्ग्लरुद्धाम् ।
समुद्धरन्नुद्धतनैजशक्त्या
स नायकप्राज्यपद प्रपेदे ।। ६७

श्लो॥ सप्तार्चिषा वाऽपि सहस्रभासा
नान्तस्तमो नुन्नमल जगत्याः ।
सोऽय महार्घैस्स्वकृतिप्ररोहैः
बाह्यान्तरस्थ व्यभिनत्तमिस्रम् ॥ ६८

अजयज्जयति जेष्यति च यावच्चक्र प्रवर्तते सृष्टें ।
श्रीलोकमान्यशशिनः पाण्डुरिताशाङ्गणा यशोज्योत्स्ना ॥ ६९

जेजीयन्ता भारतीभाग्यवल्ल्यः
यावत्सर्गं ये त्वया सालवाला॰ ।
श्वेतन्ता ते कीर्तिलक्ष्मीविलासाः
आशामूलेष्वन्ततो लोकमान्य ! ७०

भारतेष्टदायकाय भारताभिमानिने
भारतापदुद्धराय भारतार्थजन्मने ।
भारतीतप फलाय भारतैकबन्धवे
भारताब्धिसभवाय भारतीश ! ते नम ॥ ७१

शाम्यन्तु सर्वघोराणि प्रजास्वाम्य प्रवर्धताम्
जगदाचार्यक देव्या भारत्या जयताच्चिरम् ॥ ७२

श्लो।। भारतीयै भरितीय पाल्यतामृजुना पथा
सत्य धर्म स्समेधेता, बल विष्णो. प्रवर्धताम् ।। ७३

इति श्रीलोकमान्यमहिमानुवर्णनं नाम
एकोनविंश स्सर्गः ।।

श्रीवाधूलसगोत्रजेन श्रीवेंकमाम्बा वेङ्कटराम प्रथमपुत्रेण
श्रीसामवेद अन्नपशास्त्रिकुलपति प्रियशिष्येण
वासोपनामक सूर्यनारायणशास्त्रिणा
विरचित श्रीलोकमान्य बालगङ्गाधर
तिलकचरित मिद सर्व
सम्पूर्णम् ।।

।। इति शम् ।।

अवन्ती प्रेस् - गौतमीग्रन्थालयम् - राजमहेन्द्रवरम् ।

# ERRATA

| पत्रम् | श्लोक | पंक्ति | दोषः | अदोष |
|---|---|---|---|---|
| 2 | ८ | 2 | भरिती | भारती |
| 3 | २४ | 1 | तुत्य | तुल्य |
| 3 | २५ | 2 | वाल | बाल |
| 7 | ६३ | 2 | बब्पाम्बु | बाष्पाम्बु |
| 11 | १० | 2 | मराटाम् | मराटाम् |
| 13 | २१ | 1 | अध्यापकी | आध्यापकी |
| 14 | २५ | 3 | विरवाङमय | वरवाङमय |
| 14 | २७ | 3 | जत्पन्तु | जल्पन्तु |
| 15 | ३१ | 3 | चग्राह | जग्राह |
| 17 | ४१ | 2 | दश ब्द | दशाब्द |
| 18 | ५२ | 2 | लोकोत्रर | लोकोत्तर |
| 19 | ५४ | 1 | दृदन्तराणि | हृदन्तराणि |
| 19 | ५४ | 3 | चाशान | चाज्ञान |
| 19 | ५४ | 4 | व्ययोतत | व्यद्योतत |
| 21 | ६१ | 4 | य धीर. | स धीर |
| 21 | ६३ | 4 | महान्नियोग | महाभियोग |
| 21 | ६४ | 3 | भोग्यमेन | भोग्यमेव |
| 23 | ७० | 1 | एकोन्सुखी | एकोन्मुखी |
| 23 | ७४ | 4 | क्रूरतथा | क्रूरतया |
| 27 | ६ | 3 | त्यकृत् | सकृत् |
| 28 | १४ | 3 | प्रदृष्टान्तरा. | प्रहृष्टान्तरा |
| 32 | २ | 3 | विभत्वा | प्रविभक्ता |